# श्रीशृङ्गेरी–क्षेत्रे श्रीशारदाम्बा–कोटि–पूजोत्सवः

शृङ्गेरी । आद्यं धर्मपीठम् । जगद्गुरु-श्रीशंकराचार्यैः स्थापितम् । १२०० वर्षेभ्यः पूर्वम् । तत्र पीठदेवता भगवती श्रीशारदाम्बा । शारदाम्बा-प्रसादः सर्वेषां श्रद्धाविषयः । तेन प्रसादेन शृङ्गेरी 'श्री'चरणैः भारतविजय-यात्रा संपादिता । आसेतु-हिमाचलम् । वर्षचतुष्टयम् । तस्मात् भारते सर्वत्र धर्मजागृतिः । सर्वेषां महान् संतोषः । धर्माचरणे प्रवृत्तिः । भक्ति-मार्गस्य प्रसारः ।



शृङ्गेरीश्रीचरणाः

श्रीशारदाम्बा-भक्तोत्तमैः निर्णीतम् । विजययात्रा-साफल्यार्थं श्रीशारदाम्बा - विशेषपूजा संयोजनीया । ललिता-सहस्रनामावली दशसहस्रवारं जप्त्वा देवी पूजनीया । ३ ऑक्टोबर १९६८ तः १९ ऑक्टोबर १९६८ पर्यन्तम् । इयम् एव कथ्यते श्रीशारदाम्बा-कोटि-अर्चना । दशसहस्रवारं सहस्रनामावली । एकेन भक्तेन सहस्रनामावलीकृते दशरूप्यकाः प्रेषणीयाः । 'शारदा'-कार्यालय-संकेतेन । सत्वरम् । सश्रद्धम् । सादरम् । सानन्दम् । तेन किं भवेत् ? दशसहस्र-भक्तानां प्रत्येकं दशकम् । लक्षरूप्यकाः भवन्ति । रूप्यकलक्षेण श्रीशारदाम्बायाः कोट्यर्चना संपन्ना भविष्यति । १९ ऑक्टोबर ६८ दिने ललिताहोमानुष्ठानं भवेत् । प्रत्येकस्य दशरूप्यक-वितरकस्य भक्तस्य कृते अर्चनाप्रसादत्वेन श्रीशारदाम्बा-रजत-प्रतिमा प्रेषिता भवेत् । अतः त्वर्यताम् । शारदाम्बा-कोट्यर्चन-महोत्सवे स्वीयः दशसहस्रांशः प्रेष्यताम् ।

अन्यच्च । ये कोट्यर्चना-महोत्सवं द्रष्टुम् इच्छन्ति । सत्वरं तत्र आगच्छन्तु । निवासप्रसाद-व्यवस्था सुनिश्चिता । अदृष्टः पुण्यलाभः । 'शारदा'-कारणा नेतृत्वेन महाराष्ट्रजनाः भक्तोत्तमाः शृङ्गेरीं गमिष्यन्ति । १७-१८-१९-२० ऑक्टोबर १९६८ दिनेषु । तदर्थम् अपि त्वर्यताम् । आराम-बस-यानेन तत्र गन्तुं 'शारदा'-कार्यालये नामाङ्कनं क्रियताम् । अयं पुण्यकालः । अयं धर्मकालः । विजयतेतमां भगवती श्रीशारदाम्बा । विजयन्तेतमां भगवत्पूज्यपादाः श्रीशंकराचार्याः ।

---

शारदा

आश्विन १८९०
सप्टेम्बर-ऑक्टोबर १९६८

# भव्यभाग्याः श्रीवाराणसीक्षेत्रम् आगच्छन्तु ।

अमृतवाणी शारदा । सुरससुबोधा शारदा । विश्वमनोज्ञा शारदा । ललिता हृद्या रमणीया शारदा । भारते परराष्ट्रेषु च सुप्रसिद्धा शारदा । तस्याः समाप्तं नवमं वर्षम् । दीपावली-महोत्सवे दशमं वर्षं सा प्रविशति । दशमवर्षीयः पदन्यासः । सोत्साहम् । सानन्दम् । साभिमानम् ।

भारत-धर्म-मन्दिरे शारदा-वीणा-झङ्कारः । कर्णमधुरः । चित्ताकर्षकः । अनेन स्वरमाधुर्येण गतवर्षे सुप्रसन्ना शृङ्गेरी-'शारदा'-पीठ-श्रीः । 'श्री' चरणैः 'शारदा-कार'-सहिता 'शारदा' स्वायत्तीकृता । सप्रसादम् । ससंतोषम् । अहो भाग्यं संस्कृतस्य । अहो पुण्यवत्ता पुण्य-पत्तनस्य । अहो महत्ता महाराष्ट्र-विषयस्य !

स्मर्यताम् ! सावधानं श्रूयताम् !! शतं विहाय त्वर्यताम् !!! कदा ? कुत्र ? किमर्थम् ? निवेद्यते । —

वाराणसी-क्षेत्रे । अस्मिन् दीपावली-शुभ-मासे । आश्विनस्य कृष्णपक्षे । अष्टमी-पुण्यतिथौ । पवित्रे सोमवासरे । सूर्योदय-मङ्गलक्षणे । के. २०।१५४ राजमन्दिरम्, वाराणसी—१ इत्यत्र ।

कः तत्र विशेषः । अभूतपूर्वः विशेषः । अश्रुतपूर्वः प्रसंगः । वाराणसी विद्याकेन्द्रम् । विद्यादेवी शारदाम्बा स्वयं तत्र विराजते । मूर्तिमती विद्या । जीवन्ती विद्या । रसनाग्रनर्तकी शास्त्रखनिः । सर्वेषां दर्शनानां साक्षात्कारः । तस्य लौकिकं नाम पण्डितराजः द्राविडः राजेश्वरशास्त्री इति । एतेषां चरणकमलासने 'शारदा'-दशम-वर्षारम्भाङ्कः सुखासीनः भविष्यति । सर्वे विद्यावन्तः संस्कृत-रसिका मङ्गलक्षणम् अमुम् अनुभवन्तु । स्वात्मानं पवित्रीकुर्वन्तु । भव्यभाग्याः तत्र समुपस्थिता सन्तु । मन्दभाग्याः शुभेच्छाः प्रेषयन्तु । किम् अधिकं निवेदनीयम् । प्रत्यक्ष प्रमाणम् एव श्रेष्ठम् । गरिष्ठम् । वरिष्ठम् । अतः त्वर्यताम् । स्मर्यताम् । सर्वं प्रत्यक्षीक्रियताम् । तेन सर्वे धन्याः सन्तु । पुण्याः भवन्तु । स्वात्मानं परमात्मानं च संतोषयन्तु । इयम् एव प्रार्थना । इदम् एव निमन्त्रणम् । नमो नमः ।

पुणें ) महाराष्ट्रराज्यशासन-भारतकेन्द्रशासन-पुरस्कृता विश्वप्रिया (मुम्बई
शृङ्गेरी-शारदापीठ-श्री-शंकराचार्यैः संस्कृत-'शंकरकृपा'-त्वेन स्वीकृता।

सौर १६ आश्विन १८९०



# शारदा

संपादकः वसन्त अ. गाडगीळ.

वर्षम् ९ अङ्कौ २१-२४

वार्षिकमूल्यम् रू. ८ * अस्य अङ्कस्य रू. १-६०

## ॥ श्रीवेङ्कटेशस्तोत्रम् ॥

कमला-कुच-चूचुक-कुङ्कुमतो नियतारुणितातुलनीलतनो ।
कमलायतलोचन लोकपते विजयीं भव वेङ्कटशैलपते ॥ १
सचतुर्मुख-षण्मुख-पञ्चमुख-प्रमुखाखिलदैवत-मौलिमणे ।
शरणागतवत्सल सारनिधे परिपालय मां वृषशैलपते ॥ २
अतिवेलतया तव दुर्विषहैः अनुवेलकृतैरपराधशतैः ।
भरितं त्वरितं वृषशैलपते परया कृपया परिपाहि हरे ॥ ३
अधिवेङ्कटशलमुदारमतेः जनताभिमताधिकदानरतात् ।
परदेवतया गदितान्निगमैः कमलादयितान्न परं कलये ॥ ४
कलवेणुरवावशगोपवधूशतकोटिवृतात् स्मरकोटिसमात् ।
प्रतिवल्लविकाभिमतात् सुखदात् वसुदेवसुतान्न परं कलये ॥ ५
अभिरामगुणाकर दाशरथे जगदेकधनुर्धर धीरमते ।
रघुनायक राम रमेश विभो वरदो भव देव दयाजलधे ॥ ६
अवनीतनयाकमनीयकरं रजनीकरचारुमुखाम्बुरुहम् ।
रजनीचरराजतमोमिहिरं महनीयमहं रघुराममये ॥ ७
सुमुखं सुहृदं सुलभं सुखदं स्वनुजं च सुकायममोघशरम् ।
अपहाय रघूद्वहमन्यमहं न कथञ्चन कञ्चन जातु भजे ॥ ८
विना वेङ्कटेशं न नाथो न नाथः सदा वेङ्कटेशं स्मरामि स्मरामि ।
हरे वेङ्कटेश प्रसीद प्रसीद प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ ॥ ९
अहं दूरतस्ते पदाम्भोजयुग्मप्रणामेच्छयाऽगत्य सेवां करोमि ।
सकृत्सेवया नित्यसेवाफलं त्वं प्रयच्छ प्रयच्छ प्रभो वेङ्कटेश ॥ १०
अज्ञानिना मया दोषान् अशेषान् विहितान् हरे ।
क्षमस्व त्वं क्षमस्व त्वं शेष-शैल-शिखा-मणे ॥ ११

# भारतीय-प्राच्य-विद्या-परिषद्
## वाराणसी-क्षेत्रे २४ तमम् अधिवेशनम्

वाराणसी दि. २४— ('शारदा–' प्रतिनिधि:)

होशियारपुर-नगरस्थ-वैदिकसंस्थासंचालकानां प्रा. विश्वबन्धु-शास्त्रिणां साभापत्येन १२, १३, १४, ऑक्टोबर १९६८ इति दिनत्रयं वाराणसेय-संस्कृत-विश्वविद्यालय-द्वारा निमन्त्रिते प्राच्यविद्या-परिषद: २४ तमे अधिवेशने सहस्राधिकसंख्यया प्रतिनिधीनाम् उपस्थिति: सुनिश्चिता ।

अस्मिन् अधिवेशने विविधविषयेषु विभागाध्यक्षा: निम्ननिर्दिष्टा: ।

१ वैदिक–डॉ. चिं. ग. काशीकर: पुणें विद्यापीठ, पुण्यपत्तनम्

२ इराणियन्– डॉ. पी. के. अङ्कलेसारिया. कामा इन्स्टिटयूट, मुम्बापुरी

३ क्लासिकल् संस्कृत–प्रा. पी. एन्. पुष्प. श्रीनगरम् (काश्मीर)

४ इस्लामिक स्टडीज्–प्रा. एन्. एस्. गोरेकर. झेविअर् कॉलेज. मुम्बई

५ अरेबिक्-पर्शिअन्–डॉ. मुख्तारउद्दिन अहमद मुस्लीमविद्यापीठ, अलीगड

६ पाली-बुद्धीझम्–प्रा. ए. सी. बानर्जी. कलकत्ता विद्यापीठ, कलकत्ता

७ प्राकृत-जैनीझम्–डॉ. नथमल टाटीया. वैशाली,

८ इतिहास:–डॉ. बुद्धप्रकाश. कुरुक्षेत्र विद्यापीठम्, कुरुक्षेत्रम् (उ. प्र.)

९ आर्किआलॉजी–श्री. बी. बी. लाल डायरेक्टर जनरल आर्किआलॉजी न. दिल्ली

१० भारतीयभाषाशास्त्रम्–डॉ. एस्. एन्. गजेन्द्रगडकर मुम्बई विद्यापीठम् मुम्बई

११ द्राविडाभ्यास:–डॉ टी. पी. मीनाक्षीसुन्दरम्, मदुराई-विद्यापीठ-कुलगुरु:–मदुरा

१२ तत्त्वज्ञान-धर्म–प्रा. एन्. के. देवराज. हिन्दुविश्वविद्यालय: वाराणसी

१३ तान्त्रिकविज्ञान-विशेषकला–डॉ. यू. पी. शाह. ओरिएण्टलइन्स्टिटयूट बडोदा

१४ दक्षिणपूर्व-आशिभ्यास:– प्रा. के. डी. वाजपेयी सागरविद्यापीठम् सागर

अस्मिन् अधिवेशने पण्डितपरिषद् अपि संपत्स्यते ।

## आदृता शारदाकाराणां संस्कृतसेवा शासनेन ।
## महाराष्ट्रराज्यस्य पुनर्गठिता संस्कृतसमितिः ।

**मुम्बई दि. १६ सप्टेम्बर ११६८**

महाराष्ट्र-राज्य-शासकीय-संस्कृत-समितौ शासनेन, महाराष्ट्र-संस्कृतपरिषदध्यक्षः डॉ. श्री. भा. वर्णेकर, परिषदः प्रधान-कार्यवाहः शारदाकारश्च पं. गाडगीळ वसन्तरायः तथैव श्रीबालमुकुन्द-संस्कृत-महाविद्यालयस्य प्राचार्यः पं. भागवत वामनशास्त्री इति संस्कृतप्रसारकार्ये कृतभूरिपरिश्रमं पण्डितत्रयं सदस्यत्वेन स्वीकृत्य त्रयाणाम् एतेषां संस्कृत-सेवाकार्यम् आदृतम् इत्यतः महाराष्ट्रेषु सर्वत्र सानन्दं समाधानम् अनुभूयते ।

* * *

## महाराष्ट्रराज्य-संस्कृत-स्थायि-समितिः ....पुनर्रचना

महाराष्ट्रशासन-शिक्षण-समाज-कल्याण-विभागः
एस्. एस्. एन्. ३२६७।६३'।५९–ई

सचिवालय-विस्तार-भवनम्, मुम्बई ३२

**शासन-निर्णयः—** शासन-निर्णय क्र. एस्. एस्. एन्. १३६० ई, दि. ६-७ मे १९६० इत्यनुसारं स्थापिता या स्थायि-समितिः, तस्याः पुनर्-रचनाम् आवश्यकीं मत्वा निम्नलिखिता पुनर्रचिता नूतना समितिः नियुज्यते महाराष्ट्रशासनेन ।

१ **प्राचार्य वा. वि. करम्बेळकर**-राजाराममहाविद्यालयः कोल्हापूरम्
२ **डॉ. अ. द. पुसाळकर**. भाण्डारकर-प्राच्यविद्या-मन्दिरम् पुण्यपत्तनम्
३ **श्री. जयन्तकृष्ण दवे** भारतीय-विद्याभवनम् मुम्बई ७
४ **डॉ. श्री. भा. वर्णेकर**. नागपुर विश्वविद्यालयः, नागपुरम्
५ **पं. वसन्त अ. गाडगीळ**. संपादकः 'शारदा' पुण्यपत्तनम् २
६ **न्या. बलवन्तराव घाटे**, एकनाथ-संशोधन-मन्दिरम्, औरङ्गाबाद
७ **प्राचार्य वामनशास्त्री भागवत**. टिळक-महाविद्यापीठम्, पुण्यपत्तनम् २
८ शिक्षण-उपसंचालकः ( संस्कृतविभागः ) शिक्षणसंचालनालयः,

महाराष्ट्र राज्यपालानाम् आदेशानुसारम् ।

**पं. तु. महाजन**

दि. १२ सप्टेम्बर १९६८. अवर-सचिवः, महाराष्ट्रशासम्

# मेघदूतारोहणम्

मन्दे २८-१-६७ ॥श्रीः॥ मेघदूतम्

गगनाङ्गणे प्रोड्डीयमानम्

आयुष्मते गिरीशाय स्वस्ति। मुम्बई...कलकत्ता

सपाद-त्रिवादने मध्याह्ने ३-३० प्रमाण वेलायां (१५-१५ भारतीय प्रमाणवेला) मेघदूते १३ एन् क्रमाङ्किते सुखासने स्थितेन मया सानन्दम् अनुभूतं स्वायुषि प्रथमं प्रशमं प्रवरं च मेघदूतस्थं गगनोड्डयनम्। स्मृतः सपदि विज्ञानोत्कर्षमूलः परमेष्ठी जगन्नाथः। सूंसूंयमानध्वनि-संकुलित-श्रोत्रविवरं समशीतोष्णं समस्तसुखोपभोगसमृद्धं मेघदूतं (न केवलं दृष्ट्वा स्पृष्ट्वा वा) परमेशसंकेतेन समारुह्य नीयमानोऽस्मि संप्रति जगत्प्रियनिवासं वसुंधरावैकुण्ठं श्रीजगन्नाथक्षेत्रम्। वस्तुतस्तु लीलाविश्वम्भरस्य क्रीडनकमात्रं जगतीतलम् इदं मे मे '-कुर्वाणैः मानवैः तनूकृतं स्वीयं क्षुद्रं माण्डूक्यम् इव।

यदि समये सर्वैः स्मर्यते कर्तुम् अकर्तुम् अन्यथा वा कर्तुं प्रभुः सर्वेश्वरः तर्हि प्रस्कन्दिताहंभावानां समेषां याथार्थ्यतः समुत्कर्षः सुनिश्चितः।

इदमेव ज्ञातुं साक्षात्कर्तुं कारयितुं च नैजायुषि शतं (कार्यजातं रूप्यक-राशिं च) विहाय (व्ययीकृत्येत्यर्थः) अनुभूयतां मेघदूतोड्डयनम् इति शम्।

भवदीयः

बाबा

# भारत-राजधान्यां संस्कृत-नाट्य-महोत्सवः

नवदेहली, दि. १५ सप्टेम्बर ६८

महाराष्ट्रावगमकेन्द्रद्वारा १४–१५ सप्टेम्बर ६८ इति दिनद्वयं प्रवर्तितः संस्कृतनाटचमहोत्सवः मुम्बापुरीस्थ-ब्राह्मणसभा-सहकार्येण। त्रयोदशे दिनाङ्के सायं ६-१५ वादनावसरे प्रयोजितं ब्राह्मणसभया श्री. वा. दि. गाङ्गल-विरचितम् अभिनवं संस्कृतनाटचं 'भर्तृहरीयं' नाम वातानुकूलित अभिनवे मावळणकर-नाटचगृहे। पुरातनाधुनातन-नाटच-तन्त्रसंगमेन विरचितम् इदं रूपकम् आवर्जितवत् सहृदयानां चेतांसि। राज्यशासन-व्यवहार-रक्तपट्टिका-निबद्धोऽपि कविः स्वीयं कविहृदयं रक्षितवानिति दर्शितमनेन प्रयोगेण। संविधानकम् अपि राजकवि (राजा चासौ कविश्च) भर्तृहरिचरित्रविषयकं सर्वथा नाटचमयम् आसीत्। मानवजीवितानुभवस्य संपूर्णं गभीरं च दर्शनम् अनुभूयते भर्तृहरिचरिते। अत एव च विजयस्यास्य प्रकटनार्थम् अपेक्ष्यते कविरपि तादृशः समर्थः। तदेतत् सामर्थ्यं बह्वंशेन प्रकटितं गाङ्गलमहोदयैरिति निवेदयितुं मोमुद्यते नश्चेतः। भर्तृहरिविरचितानि नीतिशृङ्गारवैराग्य-शतकानि खलु परिचितानि सर्वस्यापि संस्कृतभाषाभिज्ञस्य। भर्तृहरिचरित्र-विषयकः प्रवादोऽपि विदितो बहूनाम्। एवं सत्यपि भर्तृहरीये चरितस्यास्य नाटचमय आविष्कारोऽभिनवो मनोहारी च प्रतीतः सहृदयैः। ईदृश्येव वर्तते रूपकस्यास्य रचना यत् प्रारम्भतोऽन्तपर्यन्तं वर्धमानम् एव तिष्ठति प्रेक्षकाणाम् औत्सुक्यम्। प्रस्तावनायां पुराणविषयाङ्गीकरणस्य (नवीनमित्येव न साधु सर्वम् इत्यादि) लेखकेन कृतं समर्थनं यथार्थमेवेति प्रतीयते प्रयोगदर्शनेन। भर्तृहरिचरिते प्रचलितः फलविषयकः प्रवादोऽतीव नाटचमयरीत्या गुम्फितोऽस्मिन् प्रबन्धे। वैदग्ध्यवत् पाण्डित्यम् अपि प्रतिपदम् अनुभूयते अस्यां रचनायाम्। शतकत्रयस्थ-श्लोकानां कलात्मकः उपयोगस्तु सर्वत्रैव दृश्यते। परं प्राचीन-संस्कृत-रूपकाणाम् अभ्यासोऽपि प्रकटीभवति तत्र तत्र। विशेषतः प्रभाविता कवेः शैली कालिदास-शूद्रक-भवभूतीनां रचनाभिः। शब्दा वाक्यखण्डाः संपूर्णवाक्यानि च प्राचीनकवीनाम् अतीव कौशलेनोपयोजितानि गाङ्गल-महोदयैः। प्राचीनरूपकस्थप्रसङ्गा अपि कौशलेन गुम्फिताः कविना स्वीये संविधानके। तथा हि तृतीयाङ्कस्थविश्रम्भके वर्तमानो मृगयाप्रसङ्गः स्मारयति शाकुन्तल-द्वितीयाङ्कस्थं विश्रम्भकम्। चतुर्थाङ्कगतश्च नृत्य-प्रसङ्गः सहसैव स्मारयति मालविकाग्निमित्रगतं समानं प्रसङ्गम्।

किं तु कलात्मकम् अनुकरणमिदं कवेः प्रतिभोत्कर्षमेव दर्शयति । संविधानकाले वैराग्यशतकानुसारेण वेदान्तदर्शनदृष्टया कृतं मानवजीवितस्य भाष्यम् अपि नितरां प्रभावि वर्तते ।

एतादृशस्य नाटकस्य प्रयोगोऽपि नैव सुकरः किं तु ब्राह्मणसभया महद्यशोऽर्जितम् अस्मिन् कार्ये इति निश्चप्रचम् एव । सर्वेषामपि पात्राणां स्वाभाविकः एवासीत् संस्कृतभाषोच्चारः । सर्वैश्च तास्ता भूमिकाः परिज्ञानपूर्वकम् एवाभिनीताः । संगीतनियोजनम् अपि नितरां चेतोहरम् आसीत् । सूत्रधार-प्रवेशतो भरतवाक्यपर्यन्तं सर्वैरेव प्रकटीकृतं स्वीयम् अभिनयनैपुण्यम् । प्रारम्भ एव सूत्रकारभूमिकायां बाळासाहेब टिकेकरैः सुमति टिकेकराभिश्च संगीतकौशलेन स्वरमाधुर्येण च वशीकृतानि प्रेक्षावतां हृदयानि । प्रथमाङ्कत एव च विदूषकभूमिकां नाटयद्भिः श्री. बापटमहोदयैर्भर्तृहरिभूमिकायां वर्तमानैश्च नटरत्न दाजी भाटवडेकरमहोदयैरावर्जितानि प्रेक्षकहृदयानि स्वीयेनासामान्येनाभिनयनैपुण्येन । सर्वज्ञभूमिकां नाटयतां नारायणबोडसमहोदयानामभिनयोऽप्यर्हति सविशेषम् उल्लेखम् । चतुर्थाङ्के च नृत्यकौशलेन नयनापण्डितमहाभागाभिः कलश इव निर्मितोऽस्य नाट्यदेवकुलस्य । एतादृशा नाट्यप्रयोगाः संस्कृतभाषां लोकप्रियां कर्तुं नितराम् उपकारकाः स्युरित्यत्र नास्ति संशीतिलेशोऽपि ।

चतुर्दशे दिनाङ्के सायं ६–१५ वादनावसरे तत्रैव मावळणकरनाट्यगृहे महाकविशूद्रकविरचितं मृच्छकटिकं नाम प्रकरणं नाटितं ब्राह्मणसभयैव । सुदीर्घम् इदं नाट्यं सुरसं सुरुचिरम् अपि च प्रयोगदृष्टया सुदुष्करम् एव । एतदर्थमेव प्रयोगसौकर्याय संपादिताऽस्य लघ्वावृत्तिरेव प्रस्तुताऽऽसीत् । अस्याम् आवृत्त्यां मूलतो बहूनि परिवर्तनानि श्रुत्वा तत्र तत्राकुलीभूतानि मूलाध्ययनवतां चेतांसि । क्वचित्स्वल्पमूल्याः परिहासाः क्वचिन्महत्त्वपूर्णस्य भागस्य त्यागः क्वचिच्च मूलवाक्यार्थापरिज्ञानात् उद्भूतः संमोहो रसभङ्गकरा इवाभूवन् संस्कृताभिज्ञानां कृते । क्वचिच्च कोङ्कणप्रदेशे प्रचलित-दशावतार-क्रीडनवन्मूलसंविधानकमात्रं शूद्रकस्यादाय यत्किंचिदपि वदन्ति किं पात्राणीति भ्रान्तिरप्यासीत् । प्रयोगस्य प्राग् अभ्यासार्थम् आवश्यकः कालोऽपि प्रायो न लब्ध इति भाति । तेनैव क्वचित् क्वचित् स्खलितभाषणान्यपि विदितानि । एका विसंगतिरपि निर्देशम् अर्हत्यत्र । जातिकुसुमवासितः प्रावारकश्चारुदत्तेन कर्णपूराय कर्णपूरेण च वसन्तसेनायै दत्तः । तदनन्तरं पुनश्चारुदत्तहस्ते कथम् आगतः स इति नैव ज्ञायते । सत्यप्येवं नितरां रञ्जक एवासीत्

## सानन्दं साभिमानं हृद्यं चाभिनन्दनम् ।

प्रेमसुहृद्वयन् पण्डित प्रवरान् वसन्तरायान् प्रति सादरं सस्नेहं च विलिख्यते ।

अद्य प्रातदेव सर्वकार-नियुक्तायां संस्कृतसमितौ श्रीमतां नाम मदृक्पथमुपयातम् । तद् वाचायत्वा परां मुदं भजते मदीयं मानसम् । एतदर्थं नैकाशीःशतपुरःसरं श्रीमन्तोऽभिनन्द्यन्ते स्वीकृतकार्येषु च सततं यशः प्राग्भारभाजो भूयासुरित्याशास्यते ।

मदीयोऽयमेव प्रणय—

न याचे यशोऽहं न वायुः सुखं वा । न वित्तेषु चित्तं मदीयं कदाचित् ॥
इयं प्रार्थना यत् स्फुरत्साधनस्य । सुमित्रस्य हार्दस्य पात्रं भवेयम् ॥

इति शम् ।

दि. १५-९-६८ भवदीय एव

पन्तो विष्णुशर्मा

---

असावपि प्रयोगः । सार्धचतुर्होरापर्यन्तं हास्यैस्तालिकाभिश्च प्रकटीकृतः प्रमोदः प्रेक्षकैः । विशेषेण हि विदूषक-भूमिकां नाटयतां प्रा. नेनेमहाभागानां शकारभूमिकायां नटरत्न दाजी भाटवडेकराणां चाभिनयः सुमति टिकेकराणां च संगीतं स्वरमाधुर्यं प्रयोगस्य यशसेऽभूत् । प्रा. नेने महाभागानां निद्राभिनयस्तु केवलम् अतुल एवासीत् । नेपथ्यादिरचनापि सुसंपन्नासीत् । अधिकयशसे त्विदं सूच्यते यद् एतादृशानां दीर्घरूपकाणां प्रयोगो दिनद्वये शक्यं चेद् विभज्य प्रस्तोतव्यः ।

न. दिल्ली डॉ. चिं. त्र्यं. केङ्घे

# इदं राष्ट्रकार्यम् ! इदं धर्मकार्यम् !!

अध्यात्ममूला मानवतावादिनी भारतीया संस्कृतिः जीवननिष्ठा।


वसन्त. अ. गाडगीळ

सुबोधं संस्कृतं माध्यमम्। बहुजनसमाजः कार्यक्षेत्रम्। सर्वस्व-त्यागेन सधैर्यम् इदं समाजसेवाकार्यं कुर्वाणः निरलसः क्रियावान् पण्डितः गाडगीळ वसन्तशर्मा। गतानि १८ वर्षाणि तेषां संस्कृत-प्रसार-कार्यं सर्वपरिचितम्। तैः संचालिता 'शारदा' सर्वत्र सुप्रसिद्धा। असंख्यः सुसंस्कृतः तेषां मित्र-परिवारः। तेन निर्णीतम्– अयं पण्डितः संमाननीयः विशेष-समारोहेण इति।

धर्म-विद्या-संस्कृति-समाज-पत्रकारिता-प्रभृति-विविधक्षेत्रेषु स्वीयं सुसंस्कृतं प्रसन्नं च व्यक्तिमत्त्वं कार्यमाध्यमेन सर्वप्रियं कुर्वाणैः पं. वसन्तरायैः संपादितं विश्वासधनं पू. शृङ्गेरीपीठ-श्री-शंकराचार्य-आचार्य-श्रीतुलसी (अणुव्रत-प्रवर्तकाः) प्रभृतिभ्यः धर्माचार्येभ्यः सामान्य-कार्य-कर्तृपर्यन्तं सर्वेषाम्। सर्वपक्षीयः सर्वधर्मीयः च तेषां सन्मित्रपरिवारः तेषां लोक-संग्राहकत्वम् एव प्रमाणयति।

सनातन-भारतीय-संस्कृतेः विश्वोपकारकाणि मूलतत्त्वानि स्वीयेन लेखनेन, वाक्पाटवेन, जीवनव्यवहारेण च सर्वेषां पुरस्तात् स्थापयितुम् अहर्निशम् अविश्रान्तं प्रयत्नशीलस्य अस्य समाजसेवकस्य गौरवसमारोहे सर्वे सहभागिनः भवन्तु। इतरान् तदर्थं प्रेरयन्तु। इदं राष्ट्रकार्यम्। इदं धर्मकार्यम्।

पण्डित गाडगीळ वसन्तरायाणां जीवनकार्यं प्रभाव-संपन्नं कर्तुं सत्कारनिमित्तेन समर्पणीयं तेभ्यः गौरवनिधित्वेन लक्षार्धं रूप्यकाणाम् (रू. ५०,०००) इति सत्कार-समिति-संकल्पः।

'सत्कार-समिति-सदस्यानाम् इदम् आवाहनं सुफलीभवेत्' इति सुदृढं विश्वसिमः।

## पं. वसन्तराव गाडगीळ-सत्कार-समितिः

१५३ पवनविहारः, मुम्बई १९ * उद्यानप्रासादः, पुण्यपत्तनम् २

# कैवल्यधामामन्त्रणा

प्रयातु शुभसंदेशः सोऽयं कैवल्यधामनि ।
नाथसम्मेलनं भावि पुण्येऽस्मिन् पुण्यनामनि ॥१॥
हठराजयोगमुख्यशिवगोरक्षधारया ।
ज्ञानेश्वर्या धारया च भक्तियोगप्रधानया ॥२॥
अभिषिक्ता दिव्यसिद्धमानवौघा दिवो भुवः
पुण्ये तयोः संगमोऽस्तु गङ्गायमुनयोरिव ॥३॥
इडापिङ्गलयोर्यद्वत् सुर्याचन्द्रमसोर्यथा ।
सुषुम्णावत् त्रिवेणीयं तीर्थराजायतां चिरात् ॥४॥
ज्ञानामृते स्नानमस्तु योगयागादिका क्रिया ।
इत्थं प्रयागतां यातु पुण्यपत्तनमुत्तमम् ॥५॥
महाराष्ट्रधरा रम्या नवनाथ-तपःस्थली ।
ज्ञानेशस्यैकनाथस्य रामदासतुकाख्ययोः ॥६॥
शिवराजस्य वीरस्य तिलकस्य तथा सताम् ।
जन्मभूमिः कर्मभूमिः पुण्यभूमिर्मनोहरा ॥७॥
अस्यामद्यापि विद्यन्ते विद्याबुद्धिबलोर्जिताः ।
तथा कैवल्यधामाद्या योगविद्यालया अपि ॥८॥
योगो ज्ञानं च विज्ञानमायुर्वेदः कलास्तथा ।
इत्थं नाथार्थोद्दिष्टं लक्षं दर्शनमुन्नतम् ॥९॥
याज्ञवल्क्यादयः प्राहुर्जनकाद्याश्च मेनिरे ।
'अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्' ॥१०॥
शिवगोरक्षनाथेन कथितं श्रुतिमन्थनात् ।
'द्विजसेवितशाखस्य श्रुतिकल्पतरोः फलम्' ॥११॥
शमनं भवतापस्य योगं भजत सत्तमाः ।
गीतायां भगवद्गीतो 'योगः कर्मसु कौशलम्' ॥१२॥
प्रत्यध्यायं पृथग् योगः समत्वं योग उच्यते ।
एवं वदति योगीशो योगबीजे शिवः स्वयम् ॥१३॥
'अपक्वाः परिपक्वाश्च द्विविधा देहिनो भुवि ।
अपक्वा योगहीनास्तु पक्वा योगेन देहिनः ॥१४॥
अयं योगस्य महिमा पृथिव्यां प्रथितः स्वतः ।
सर्वदेशे सर्वकाले सर्वथा सर्वदः शिवः ॥१५॥

आबालवृद्धरुग्णानां मानवानां हितावहः ।
तिलकोक्तः कर्मयोगो देशनिर्माणकाङ्क्षिणाम् ॥१६॥
शरीरं मानसं स्वास्थ्यं विश्वस्वास्थ्यं क्रियात्मना ।
विधातुं क्षमते योगः कैवल्यं दीर्घसेवया ॥१७॥
योगयज्ञप्रधानोऽयं नाथसम्मेलनक्रमः ।
मन्यताम् अयमात्मीयः सफलीक्रियतां बुधैः ॥१८॥
प्रदर्श्यन्तां क्रियाः सर्वाः प्रक्रिया प्रतिपाद्यताम् ।
आयान्तु योगिनः सर्वे योगविद्यार्थिनस्तथा ॥१९॥
वेदविद्याविदः सन्तः पुरातत्त्वविदो बुधाः ।
वैज्ञानिका दार्शनिका लोकसेवापरायणाः ॥२०॥

**कार्यक्रमः**

योगयज्ञादिकं प्रातर्दिवसे कीर्तनादिकम् ।
सायंकाले प्रवचनं प्रक्रमोऽयं सभाभुवि ॥२१॥

**समयः**

शाके खनाथवसुके शारदे नवरात्रके ।
नाथसम्मेलनं पुण्ये पुण्यवृद्धिकृते कृतम् ॥२२॥

**प्रणयामन्त्रणम्**

कैवल्यधाम धामानि सर्वाण्यन्यान्नि सर्वतः ।
प्रणयामन्त्रणादेव समायान्तु सभास्थले ॥२३॥

**सम्मेलनस्थलम्**

पन्त-सचीव-वाटेऽस्ति कृतं संमेलनस्थलम् ।
भोरसंस्थानराजा हि सभापतिपदे स्थितः ॥२४॥
पाटसकरः पोतदार-प्रमुखा विषयाधिपाः
आस्कराद्याः प्रवक्तारो बुधाः किंजवडेकराः ॥२५॥

**अनुयोगः**

पुनश्च कथ्यतां तत्र समायामः कदा वयम् ?
संविद् विनियमं कर्तुं भवत्सौजन्यलब्धये ॥२६॥

**प्रार्थना**

यतिनरहरिनाथः प्रार्थये प्रार्थनीयान् ।
सकलविषयबोधान् बोधनार्थं जनानाम् ॥
समधिकमुपकारं कर्तुमुच्चैस्त्रिलोक्याः ।
प्रभवतु भुवि योगो नाथसम्मेलनाद्यैः ॥२७॥

**योगी नरहरिनाथः**

# हा धिग् ! गतः सातवलेकरार्यः !!

वेदोक्तदिव्योज्ज्वलबोधराशिं स्वापूर्वपाण्डित्य-परिश्रमेण ।
सामान्यलोकाय समर्पयन् स हा ! हा ! गतः सातवलेकरार्यः ॥ १
वेदाय वेदेन च वेदहेतोः श्वसन् वसन् पक्ष्म निमीलयंश्च ।
वेदार्थमाहारविहारकुर्वन् हा धिग्! गतः सातवलेकरार्यः ॥ २
" जीवेत भूयः शरदः शताद् वै " सुप्रार्थनां वेदगतामितीमाम् ।
सत्यापयन् नव्यमुनिप्रकाण्डः हा! हा! गतः सातवलेकरार्यः ॥ ३
वेदादिसच्छास्त्रमहोदधीनाम् आजीवनं चाविगणय्य कष्टम् ।
आलोडनेनार्जितदीर्घकीर्तिर्दिवं गतः सातवलेकरार्यः ॥ ४
अनेक-विद्यास्थलधर्मपीठैः संस्थान्तरैर्मानपदैः प्रशस्तः ।
प्राचीन-देवर्षिनवावतारो हा धिग्! गतः सातवलेकरार्यः ॥ ५
सावन्तवाडीगत-कोलग्रामे विद्याप्रिये निर्धन-विप्र-वंशे ।
जातो महाराष्ट्रमिति प्रसिद्धप्रान्ते सुधन्यः शतवर्षपूर्वम् ॥ ६
सामान्य-शाला-विनयं समाप्य जगाम जे. जेऽभिध-चित्रशालाम् ।
आलेख्य-विद्याध्ययनं विधाय बभूव सत्कीर्तित-चित्रकारः ॥ ७
स्वातन्त्र्ययुद्धे परितः प्रवृत्ते विजृम्भमाणे रणवाद्यघोषे ।
संत्यज्य सिद्धां वरतूलिकां तां जग्राह दिव्योऽज्ज्वललेखनीं सः ॥ ८
" आर्यः कदाजिन्नहि दीनवृत्ति " रित्यार्यचाणक्यवचो निशम्य ।
स्वातन्त्र्यनादं तिलकात्तथैव स्वातन्त्र्ययुद्धाध्वरदीक्षितोऽभत् ॥ ९
" उर्जस्वलं वैदिक-राष्ट्रगीतम् " इत्याख्य-तेजस्वितदीय-ग्रन्थः ।
रुद्धस्तदानींतनशासनेन निर्वासितश्चैव स भाग्यपुर्याः ॥ १०
तेजस्विराष्ट्रीय विचारवन्ति श्रुत्वा तदीयोज्ज्वलभाषणानि ।
लेखांश्च ग्रन्थांश्च तथैव दृष्ट्वा बभूव् राङ्ग्लाः भयभीतचित्तः ॥
ततो दयानन्दमुनिप्रभावात् प्रभावितश्चार्यसमाजसंस्था- ।
क्षेत्रे प्रविष्टो महनीयकीर्तिर्वेदोपदेष्टा समभूद्वरिष्ठः ॥ १२
काङ्ग्रीस्थ-विद्यालय-वेद-पीठे प्राचार्यपीठं परिमण्डयन् सः ।
"तेजस्विता वैदिकप्रार्थनाया' इत्याख्य-तीव्रं स लिलेख लेखम् ॥
तेनाङ्ग्लभूपैः कुपितैर्निरुद्ध आनीय कोल्हापुरनामपुर्याम् ।
सार्धाब्द-कारागृह-वासदण्डं निर्णीय तत्रैव निरोधितश्च ॥ १४
संप्राप्य लाहोरपुरं विमुक्तः संस्थाप्य तत्रैव च चित्रशालाम् ।
राष्ट्रीय-संजागर-कार्यशङ्खं कायेन वाचा मनसा स दध्मौ ॥ १५
प्राचीन-वेदादिक-शास्त्रशोधं कर्तुं स औन्धाधिपराजधान्याम् ।
आतिष्ठिपन्मण्डलमेकमार्यः पूर्वं च पञ्चाशतिवत्सराणाम् ॥ १६

तथैव तेन श्रुतिसंहितानाम् अत्यल्पमूल्यान् स्वरशास्त्रशुद्धान् ।
सुसुन्दरान् सर्वगुणैः सुपूर्णान् ग्रन्थान् प्रकाश्योपकृतं नितान्तम् ॥
वैयासिकी-भारत-संहितायास्तथाऽऽदिकाव्यस्य समूलवन्ति ।
विशुद्ध-भाषान्तर-पुस्तकानि लोकैकलभ्यानि कृतानि तेन ॥ १८
आध्यात्मिकं भौतिकदैविकं च वेदस्य त्रैविध्ययुतं सुभाष्यम् ।
श्रीमद्दयानन्दमुनिप्रदिष्ट-शैल्यानुसारं स चकार हिन्द्याम् ॥ १९
यज्ञाध्वरे कल्पितहिंसनस्य वेदे पवित्रे परमेशबोधे ।
लेशोऽपि नास्तीत्युपपत्तिजातैः संसाधयामास स धन्यधन्यः ॥ २०
गीता-विशुद्धार्थ - विमर्शहेतोः प्रकाण्ड-पाण्डित्य-विलास-शोभि ।
प्रमाणसातत्य-सुतर्कयुक्तं विशालभाष्यं स लिलेख हिन्द्याम् ॥ २१
ग्रन्थान्तरब्राह्मण-संज्ञितानां भाष्यं तथैवोपनिषद्वराणाम् ।
नैकासु भाषासु विरच्य नित्यं संपादयंश्चैव सुपत्रिकाश्च ॥ २३
कृत्वा चतुर्विंशतिभागयुक्तां सुखागमां संस्कृतपाठमालाम् ।
संचाल्य नव्याः सुगमाः परीक्षाः सेवापरोऽभूत् स च देववाण्याः ॥
षष्टचब्दमात्रे समये स्वकीये चतुःशतं ग्रन्थवरान् प्रणीय ।
उत्थापयन् वैदिक-शोधशैलं दामोदरो नूनमभूद् द्वितीयः ॥ २४
गान्धीवधोऽर्ध्व कलहे प्रवृत्ते विवेकविश्रान्तविमूढचित्तैः ।
जात्यन्धलोकैश्च विनाशितः स तस्यापि निष्पापमुनेर्निवासः ॥ २५
अव्याहतस्तेन तथापि धीरः स्थानान्तरं गुर्जरभू-प्रदेशे ।
गत्वा पुनः पारडि-नामधेयं प्रवर्तयामास सुदर्शनं तत् ॥ २६
गृहे गृहे वैदिकमन्त्रघोषः यावन्न गुञ्जेन्निजपूत-देशे ।
तावत्कदाचिन्नहि संभवेद् वै श्रद्धाञ्जलिर्देवमुनेर्यथार्थः ॥ २७

शासकीय-महाविद्यालयः प्रा. हरिश्चंद्र रेणापूरकरः
गुलबर्गा (मैसूर) एम्. ए.

स्मर्यताम् ! स्मर्यताम् ! स्मर्यताम् !

## शारदा-मुद्रण-सिद्धि-मन्दिरम्, पुण्यपत्तनम् २

४२५ सदाशिव पेठ, खजिनामहाल-भवनम् पुण्यपत्तनम् २

।। ज्ञानमयं तपः ।।

# इण्डियन इन्स्टिट्यूट ऑफ ॲडव्हान्स्ड् स्टडी

ग्रन्थपालः...राष्ट्रपति-निवासः सिमला–५.

स्वस्ति

श्रावणमासस्य 'शारदाङ्काद् विज्ञायते यत्' संस्कृत-प्रचारार्थं ससमारोहं 'शारदा'काराः सन्माननीयाः' इति महाराष्ट्रस्थ-संस्कृतनिष्ठैः यन्निर्धारितं स्थापिता च तदर्थं पं. गाडगीळ-सत्कार-समितिः इति। ननु नितरां मोदभाजो वयम्।

को नु खलु पं. गाडगीळमहोदयाद् इतरः संस्कृत-प्रचारार्थम् आबद्धकटिबन्धं आसमुद्रपर्यन्तायाः पृथिव्याः सततं पर्यटनं करोति? पूर्वग्रहानुबद्धतिमिरराशिं च नाशयति स्वीय-अस्खलित-ललित-गीर्वाणभारत्या?

अहो भाग्यं, भारदेमहोदयानां संस्कृतसेवकसमाजस्थापनाकल्पनायाः प्रसारः यदि वस्तुयाथातथ्यं भजेत! अखिलभारत एव अस्याः कल्पनायाः गौरवोल्लेखो भवितुम् उचितः।

महाराष्ट्रेषु कृषिविश्वविद्यालय-स्थापना उद्घोषिता सर्वकारेण। किन्तु किमिति चिरायते संस्कृतविश्वविद्यालयस्थापनाम् उद्घोषयितुम्? पण्डितपरम्पराव्याप्तमहाराष्ट्रभूमौ एवंविधस्य संस्कृत-विश्वविद्यालयस्य स्थापनाविषयिणी वार्ता किम् चर्चाऽपि न श्रूयते। सर्वदैव जागृताः शारदाकाराः 'संस्कृत-संस्कृतिविषये'ऽपि स्वीयां बद्धपरिकरतां न श्रावयिष्यन्ति किम्?

स एव सुदिनो यदा महाराष्ट्रसर्वकारः कृषिविश्वविद्यालयम् इव संस्कृतविश्वविद्यालयस्थापनाम् अपि नचिराद् एव उद्घोषयिष्यति।

ग्रन्थपालः

भवदीयः

ना. बा. मराठे

---

## संस्कारमन्दिर ( मराठी )

(लेखक:-शां. कृ. क्षीरसागर, मूल्यं रू. ३-०० व्हीनस बुक स्टॉल, पुणें २)

अत्र हि संस्कारनिर्माणक्षमाणां प्रार्थना-गीत-सुभाषित-विचारादीनां संग्रहः कृतः। बालानां बुद्धिः कोमला वर्तते। शालायां भिन्नभिन्नविषयाणां शिक्षणेनैव सह संस्कारनिर्माणमपि तेषु कार्यम्। तदर्थमेव लेखकमहोदयेन पुस्तकम् एतत् प्रणीतम्। पुस्तके खल्वत्र प्रथमभागे प्रतिमासं प्रतिसप्ताहं मुनिवचनं, प्रार्थना, गीतं, सुविचार इति चतुर्णां कार्यक्रमाणां योजना कृता। तत्र तत्र प्राचाम् अर्वाचीनानां च लेखकानां भिन्नभिन्नधर्मिणां च रचना विलिखिताः। द्वितीयभागे सांस्कृतिकसामाजिककार्याणां संक्षेपेण विवरणं कृतम्। तृतीयभागे सांस्कृतिकदिनानां परिचयः प्रदत्तः। चतुर्थभागे स्मरणार्हमहात्मनां नामानि। पञ्चमभागे राष्ट्रध्वजवन्दनस्य क्रमो निर्दिष्टः। षष्ठे भागे धर्मग्रन्थसूचिः प्रदत्ता। अन्ते च पं. का. र. वैशम्पायनमहोदयैः प्रणीता जवाहर-गङ्गा-लहरी सम्मुद्रिता।

पुस्तकम् एतत् सर्वेषाम् एव संस्काराभिलाषुकाणां परमोपयोगी। विशेषतस्तु बालकानाम् इति विधीयतां यद् उचितम् इति शम्।

वर्धमानविद्यालयः — औदुम्बरकरः वासुदेवशास्त्री

वालचन्दनगरम् ( पुण्यपत्तनम् )

---


M B
M B
॥ मुद्रैयं लोकमङ्गला ॥

* * * * * * * * * * * * * * * * * * * * *

येन केन प्रकारेण यकृतं यदि विकृतम् ।
निर्दोषं गुणकृत् तत्र 'कुमारी-कल्प' मुत्तमम् ॥

## कुमारीकल्पम्

बुभुक्षा-पाचनाद्यर्थम् आयुर्वेदिकमौषधम् ।
रामबाणसमं सेव्यं 'द्राक्षासव' मनुत्तमम् ।

## द्राक्षासवम्

आयुर्वेदीयौषधीनां शास्त्रशुद्धा विनिर्मितिः ।
निःशङ्कं निश्चिता यत्र रसशाला हि सा ध्रुवम् ॥

## दी आयुर्वेद रसशाला

## पुण्यपत्तनम् ४

शाखा

पुणें-सांगली-कोल्हापुर-बेळगांव-हुबळी-मुम्बई-अमरावती
नागपुर-इन्दोर-जोधपुर-दिल्ली

* * * * * * * * * * * * * * * * * * * * * * *

तिनिसांज(जा) (स्त्री.) सायंकालः, संध्याकालः
तिपाई (स्त्री.) त्रिपदी
तिप्पट (वि.) त्रिगुणित
तिंबणें (क्रिया.) मृद् (९ प.)
तिरकमठा (पु.) धनुःशरौ, (धनुर्बाणम्)
तिरडी (स्त्री.) शवयानं, शवरथः
तिरंदाज (पु.) धनुर्धरः, धानुष्कः
तिरपें (वि.) साचि, तिरस्
तिरवा (वि.) काण
तिरसट (वि.) विषमशील, वक्र, कुटिल
तिरस्कार (पु.) कुत्सनम्, न्यक्कारः, अनादरः
तिऱ्हाईत (वि.) तटस्थ, अपक्ष
तिवई (स्त्री.) त्रिपदी
तिसरा (वि.) तृतीय
तीट (स्त्री.) कृष्णतिलकम्
तीथ (स्त्री.) तिथिः
तीन (सं.) त्रि
तीर (न.) कूलं, रोधः, तीरं
तीर्थ (न.) १ तीर्थं, क्षेत्रम् २ तीर्थं, देवपादोदकम्
तीर्थरूप (वि.) तीर्थस्वरूप, देवतुल्य
तीव्र (वि.) चण्ड, दारुण, तीव्र
तीळ (पु.) तिलः अंगावरील तिलकालकम्
तीस (सं.) त्रिंशत्
तीळगूळ (पु.) गुडतिलाः
तीक्ष्ण (वि.) तिग्म, तीक्ष्ण, निशित
तुकडा (पु.) खण्डः, भागः, शकलः
तुकडी (स्त्री.) विभागः
तुच्छ (वि.) क्षुल्ल, क्षुद्र
तुझा (वि.) तावक, त्वदीय
तुटक (वि.) विरल, सान्तर, खण्डित
तुटपुंजें (वि.) अल्प, अपूर्ण
तुटपुंजें ज्ञान–पल्लवग्राहि-पाण्डित्यम्
तुडवणें (क्रि.) परि + मृद् (९ प.)
तुडुंब (अ.) आकण्ठम्
तुतारी (स्त्री.) तूर्यम्
तुपट (वि.) चिक्कण
तुफान (न.) १ सागरक्षोभः २ वात्या,
तुमचें (वि.) यौष्माकीण, युष्मदीय
तुंबा (पु.) १ पिण्डः, २ धवलालाबुः
तुरट (वि.) तुवर, कषाय
तुरटी (स्त्री.) स्फाटा, स्फटिका
तुरा (पु.) चूडा, चूलः, शिखण्डः
तुरुंग (पु.) कारागृहम्, बन्धनागारम्
तुलना (स्त्री.) साम्यं, सादृश्यम्
तुल्य (वि.) सम, समान
तुषार (पु.) शीकरः
तुळई (स्त्री.) वेश्मस्थूणा, नासायष्टिः
तुळस (स्त्री.) तुलसी, वृन्दा, वैष्णवी
तुळतुळीत (वि.) मसृण, स्निग्ध
तुळशीपत्र (न.) तुलसीदलं
तूं (सर्व.) युष्मद्, भवत्

तूट (स्त्री.) १ न्यूनता
२ हानिः
तूप (न.) आज्यं, घृतं
तूर (स्त्री.) तुवरी, काक्षी
तूस (न.) बुसं, तुषः
तूरकाठी (स्त्री.) तुवरीकाष्ठम्
तृणधान्य (न.) तृणधान्यं, नीवारः
तेज (न.) तेजः, द्युतिः
तेजःपुंज (वि.) कान्तिमत्, ओजस्विन्
तेजस्वी (वि.) कान्तिमत्, तेजस्विन्
तेजाब (पु.) अम्लं, द्रावकम्
तेजी (स्त्री.) १ उत्कर्षः
२ मूल्यवृद्धिः
३ महत्त्वम्
तेजीमंदी (स्त्री.) मूल्यन्यूनाधिक्यम्
तेजोभंग (पु.) अवमानः, निकारः
तेढ (स्त्री.) वैरं, विरोधः
तेथील (वि.) तत्रत्य
तेथून (क्रि. वि.) ततः
तेथें (क्रि. वि.) तत्र
तेरडा (पु.) रागदः
तेरा (वि.) त्रयोदश
तेरीज (स्त्री.) आयव्ययपत्रकम्
तेरीमेरी (स्त्री.) मत्त्वत्तं, वाग्द्वन्द्वम्
तेल (न.) तैलं, स्नेहः
तेलकट (वि.) चिक्कण, प्रमेदित
तेलंग (पु.) त्रैलिङ्गः
तेलवात (स्त्री.) तैलपूरणम्
तेलंगण (पु.) त्रिलिङ्गाः, आन्ध्राः
तेली (पु.) तैलकारः, चाक्रिकः
तेवढा (वि.) तावत्
तेव्हां (क्रि. वि.) तदा, तदानीम्
तेहतीस (संख्या) त्रयस्त्रिंशत्
तेवणें (क्रिया.) ज्वल् (१ प.)
तैनात (स्त्री.) १ दासादिपरिवारः
२ सुव्यवस्था
तो (पु.) सः
तोकडा (वि.) ह्रस्व, अपर्याप्त
तोडकें (वि.) स्तोक
तोटा (पु.) क्षतिः, हानिः
तोड (स्त्री.) उपायः
तोंड (न.) वक्त्रं, आस्यं, तुण्डम्
तोंडओळख (स्त्री.) दर्शनमात्रपरिचयः
तोडगा (पु.) १ मन्त्रप्रयोगः
२ उपायः
तोडणें (क्रि.) छिद् (७ उ.)
तोंडदेखलें (वि.) परतुष्टिकर, आपातिक
तोंडपाटीलकी (स्त्री.) उपदेशपाण्डित्यं, वाचि वीर्यम्
तोंडपाठ (वि.) मुखोद्गत, कण्ठस्थीकृत
तोंडपुजा (वि.) चाटुल, चाटुकार
तोंडमिळवणी (स्त्री.) आयव्ययसमानता
तोंडले (न.) बिम्बफलं
तोंडावळा (पु.) मुखचर्या, मुखाकारः
तोडा (पु.) पादभूषणम्
तोंडातोंडी (अ.) शाब्दिक
तोंडाळ (वि.) १ प्रलपन,
२ अपभाषक
तोतया (पु.) कूटकारः, छद्मवेशिन्

तोपर्यंत (क्रि. वि.) तावत्
तोफ (स्त्री.) शतघ्नी
तोफखाना (पु.) शतघ्नीविभागः
तोबरा (पु.) अश्वान्नभस्त्रा
तोरडी (स्त्री.) मञ्जीरं, पादकटकम्
तोरण (न.) वन्दनमाला
तोरा (पु.) दर्पः, गर्वः
तोशीस (स्त्री.) पीडा, हानिः
तोहमत (स्त्री.) मिथ्याभियोगः, मिथ्यारोपः
तोळा (पु.) कर्षः, तोलः
तोळामासा ( वि. ) कोमलतम, शीतोष्णासह
त्याग (पु.) त्यागः, दानम्
त्रागा (पु.) १ क्रोधातिरेकः, २ कोपकृतस्वशरीरघातादि
त्राटिका (स्त्री.) १ ताडका, २ उग्रस्वभावस्त्री, उग्ररूपस्त्री
त्राण (न.) बलं, शक्तिः, सामर्थ्यम्
त्रास (पु.) पीडा, बाधा
त्रासणें (क्रिया.) उद् + विज् (६ प.)
त्रिज्या (स्त्री.) गुणः, त्रिजीवा
त्रिफळा (पु.) १ फलत्रिकम् २ यष्टित्रिकम्
त्रिवार (अव्य.) त्रिः, त्रिवारम्
त्रिस्थळीयात्रा ( स्त्री. ) १ त्रिस्थलीविधिः २ नैकस्थलगमनम्
त्रेधा (स्त्री.) नैककार्यव्यग्रता (अव्य.) त्रिधा
त्रैराशिक (न.) त्रैराशिकम्
त्रोटक (वि.) संक्षिप्त, स्वल्प
त्वचा (स्त्री.) चर्मन्, त्वच्
त्वंपुरा (पु.) १ शंखध्वनिः २ बोंबोंध्वनिः
त्वरा (स्त्री.) त्वरा, वेगः
त्वरित ( क्रि. वि. ) क्षिप्रं, द्रुतम्
त्वेष (पु.) त्वेषः, क्रोधातिशयः

## थ

थकणें श्रम् (४ प.) क्लम् (४ प.)
थकलेला (वि.) श्रान्त, ग्लान
थकवा (पु.) क्लान्तिः, क्लमः
थट्टा (स्त्री.) परिहासः, नर्मन्
थट्टामस्करी (स्त्री.) हसः, परिहासः
थट्टेखोर ( वि. ) परिहासशील,
थडगे (न.) चैत्यम्, मृतगृहम्
थंड (वि.) १ शीत, तुषार, शीतल २ जड, मन्दक्रिय
थंडगार (वि.) शीतल, शीत
थंडाई (स्त्री.) शीतपेयम्
थंडी (स्त्री.) शैत्यम्
थप्पड (स्त्री.) चपेटिका
थप्पी (स्त्री.) चयः, राशिः
थबकणें (वि.) क्षणं वि + श्रम् (४ प.)
थयथयाट (पु.) क्रोधाविष्कृतिः
थर (पु.) स्तरः
थरकाप (पु.) प्रकम्पनम्
थरथरणें ( क्रि. ) कम्प् ( १ आ. ) वेप् ( १ आ. )
थवा ( पु. ) संहतिः, वृन्दं, समूहः
थांगपत्ता ( पु. ) १ उपलब्धिः २ गाधं, तलं

थाट (पु.) १ शोभा, आडम्बर:
२ रीति:, सरणि:
थाटमाट (पु.) शोभातिशय:, रामणीयकं
थाटी (स्त्री.) पात्रकम्
थान (न.) स्तन:
थाप (स्त्री.) १ चपेटिका
२ मृदङ्गाघात:
३ अपलाप:
थांबणें (क्रि.) १वि+रम् (१ प.)
२ शम् (४ प.)
थांबा (पु.) विश्रम:, विराम:
थारा (पु.) आश्रय:, आधार:
थारेपालट (पु.) स्थलान्तरम्
थारोळें (न.) पल्वलं, अल्पसर:
थाळी (स्त्री.) स्थाली, पिठर:
थालीपीठ (न.) स्थालीपिष्टक:
थिऑसॉफी (इं. स्त्री.) ब्रह्मविद्या
थिऑसॉफिस्ट (इं. पु.) ब्राह्मविद्य:
थिजणें (क्रि.) स्त्यै (१ आ.)
थिटा (वि.) ह्रस्व, खर्व, वामन
थिल्लर (वि.) चपल, अस्थिर
थुंकणें (क्रि.) निस्+ष्ठीव् (४ प.)
थुंकी (स्त्री.) निष्ठ्यूतम्, निष्ठीवनम्
थेंब (पु.) कण:, लव:, बिन्दु:
थेर (पु.) स्वैरवृत्ति:, स्वैरचेष्टा
थेरडा (वि.) स्थविर, वृद्ध
थैमान (पु.) वैकृतम्
थोटा (वि.) कुणि, व्यङ्ग
थोडकें (वि.) अल्प, स्तोक
थोडेंसे (वि.) अत्यल्प, किंचित्
थोतांड (न.) असत्यं, कपोलकल्पितम्
थोपटणें (क्रि.) आ+स्फाल् (१० प.)
थोबाड (न.) गल्ल:, कपोल:
थोबाडणें (क्रि.) चपेटिकया प्र+हृ (१ प.)
थोर (वि.) उदार, महत्
थोरवी (स्त्री.) माहात्म्यं, श्रेष्ठता
थोराड (वि.) दृढतर, स्थूलतर

## द

दऊत (स्त्री.) मषीपात्रं, मषीधानी
दक्खन (पु.) दक्षिणभारतं, दक्षिणदेश:
दखल (वि.) प्राप्त, अधिगत
दंग (वि.) मग्न, प्रसित, आसक्त
दगड (पु.) १ पाषाण:, शिला, दृषद्
२ जड:, बुद्धिहीन:
दगडावरची रेघ पाषाणरेखा, शिलालेख:
दगडफूल (न.) शिलाजम्, शिलापुष्पम्
दगडी (वि.) शिलामय, पाषाणमय
(स्त्री.) पाषाणी, दार्षती
दगदग (स्त्री) श्रमातिरेक: प्रयास:
दंगल (स्त्री.) संमर्द:, कोलाहल:
दगलबाज (फा. वि.) वञ्चक, प्रतारक
दगा (अर. पु.) प्रतारणा, वञ्चना, कैतवम्
दंगा (पु.) उपद्रव:, कोलाहल:
दंगामस्ती (स्त्री.) कलकल:

**दंगेखोर** ( वि. ) वञ्चक, प्रतारक, मायिन्,
**दंगेखोर** ( वि. ) कोलाहलकारिन्, उपद्रवकृत्
**दचकणें** ( क्रिया. ) भयचकितः भू ( १ प. )
**दटावणें** ( किया. ) तर्ज् ( १०प. )
**दटावणी** ( स्त्री. ) तर्जनम्
**दंड** ( पु. ) यष्टिः
२ हस्तः, पाणिः
३ दण्डः,
**दंडक** (पु.) कुलाचारः कुलसरणिः
**दडपणें** ( क्रिया. ) १ नि+गूह् १
२ सम्+वह् (१ प)
**दडपशाही** ( स्त्री. ) निगृहीतिः प्रत्यवष्टम्भः
**दंडवत** ( पु. ) दण्डप्रणामः, साष्टाङ्गप्रणिपातः,
**दंडुका** ( पु ) १ यष्टिः, लगुडः
**दणकट** ( वि. ) दृढ, बलवत्
**दणका** ( पु. ) प्रहारः, आघातः
**दणदणीत** ( पि. ) महत्तर, महत्तम
**दंतकथा** ( स्त्री. ) लोककथा परंपराकथा
**दंतमंजन** ( न. ) दन्तचूर्णम् दन्तशोधनम्
**दत्त**(पु.) दत्तात्रेयः, दत्तः, आत्रेयः
**दत्तक** (वि.) दत्त, दत्तक, कृत्रिम,
**ददात** ( स्त्री. ) न्यूनता, धनाद्यभावः, क्लेशः
**दंपती** दम्पती, जम्पती जायापती
**दप्तर** (अर.) १ ) राजलेखादि
२ ) पुस्तकसंचिका
**दप्तरदार** ( पु. ) लेखपालः
**दफन** ( अर. न. ) प्रेतनिखननम् प्रेतनिर्हारः
**दबकणें** ( क्रिया. )
१ सम् + कुच् (६ प.)
२ वि + रम् (१ प.)
३ भी (३ उ.)
**दबदबा**(पुः) भीतिः, भयं, साध्वसं
**दमछाट**(पु.) श्वासरोधसामर्थ्यम्
**दमडी**(स्त्री.) काकिणी, कपर्दिका
**दमणें** (क्रिया.) श्रम् ( ४ प. )
क्लम् (४ प.)
ग्लै (१ प.)
**दमदार** ( वि. ) धैर्यशालिन्, बलशालिन्
**दम धरणें** सम् + आ + श्वस् (२ पः)
**दमलेला** (वि.) श्रान्त, क्लान्त, ग्लान
**दमा** ( पु.) श्वासः, कासः
**दमेकरी** (वि.) कासपीडित, श्वासरोगिन्
**दया**(स्त्री.)कृपा, दया, अनुकम्पा
**दयाळू** (वि.) दयालु, कारुणिक
**दयाळूपणा**(पु.)दयालुता, कारुण्यं
**दर** (अव्यय) प्रति
**दर** एक प्रत्येकम्
**दर** (पु.) विक्रयः, मूल्यम्
**दरमहा** (अ.) प्रतिमासम्
**दररोज** प्रतिदिनम्
**दरवर्षी** प्रतिवर्षम्
**दरगा** (फा. पु.) यवनमन्दिरम्
**दरबार** (पु.) राजसभा, आस्थानमण्डपः

दरवाजा ( पु. ) द्वारम्
दरारा ( पु. ) भीतिः, भयं
दरिद्री (वि.) निःस्व, दरिद्र, दुर्गत
दरी ( स्त्री. ) दरी, कन्दरः
दरोडा ( पु. ) प्रसह्यचौर्यम्
दरोडेखोर (वि.) प्रसह्यचोरः
दर्जा (पु.) पदं, प्रतिष्ठा, अधिकारः
दर्जाप्रमाणें यथाधिकारम्
दर्भ (पु.) कुशः, दर्भः
दर्या (फा. पु.) सागरः, समुद्रः
दर्यावर्दी (वि.) सागरयायिन्, नौवाहक
दर्शनी (वि.) बाह्य
दलदल (स्त्री.) कच्छः
दलाल (पु.) क्रयविक्रयसंयोजकः
दलाली (स्त्री.)
१ क्रयविक्रयसंयोजनम्
२ क्रयविक्रयसंयोजकमूल्यम्
दलित ( वि. ) नीचजाति, हीनजाति
दव (पु. ) तुषारः, तुहिनम्
दवंडी ( स्त्री. ) घोषणा
दवणा ( पु. ) दमनकः
दशा (स्त्री.) १ दुर्गतिः, दुर्दशा, दुरवस्था
२ वस्त्राञ्चलम्,
३ वयोवस्था
दसकडी (स्त्री.) दशकम्
दसरा (पु.) विजयादशमी
दस्त ( पु. ) लेखः
दस्तऐवज (फा. पु.) लेख्यं, लेखः
दस्ता ( पु. ) १ बुध्नम्
२ पत्राणां चतुर्विंशतिः
दस्तुर (अर. पु.)
१ पारसीकपुरोहितः
२ स्वाक्षरी
३ पद्धतिः, रीतिः
दहशत (फा. स्त्री. ) भयं, भीतिः
दहा (सं.) दशन्, पङ्क्तिः
दहावा (वि.) दशम
दहीं (न.) दधि
दळणें (क्रिया.) पिष् (७ उ.)
दळलेलें (वि) पिष्ट
दक्ष (वि.) जागरूक, अनलस, दक्ष
दक्षता (स्त्री.) दाक्ष्यम्, जागरूकता
दक्षिणा (स्त्री.) दक्षिणा
दक्षिणी (स्त्री.) दाक्षिणात्य, कार्णाट
दाई (स्त्री.) धात्री, उपमाता
दाखल (अर. वि.) १ आगत, प्राप्त
२ लेखनिविष्ट
दाखला (पु.) प्रमाणपत्रम्
दाखविणें (क्रिया.) दर्शय्
दाखविणारा (वि.) दर्शक
दागिना (पु.) भूषणं, अलंकारः
दाट (वि.) घन, गहन, गाढ
दांडगा (वि.) धृष्ट, वियात
दांडगाई (स्त्री.) संरम्भः
दांडा (पु.) १ कुठारादिमुष्टिः
२ लगुडः, काष्ठम्
दांडी (स्त्री.) १ शिबिकायष्टिः
२ वेणुयष्टिः
दांडू (पु.) काष्ठकम्
दाढ (स्त्री.) दंष्ट्रा,
दाढी (स्त्री.) कूर्चम्, श्मश्रु
दाणा (पु.) धान्यम्

दाणादाण ( स्त्री. ) विद्रवः, अपद्रुतिः
दांत (पु.) दन्तः, रदः
दात (पु.) द्वेषः, मत्सरः
दांतदुखी (स्त्री.) दन्तपीडा, दन्तशूलम्
दांतवण ( ) दन्तधावनम्
दांता (पु.) अरः
दाता ( वि. ) दानशील, दातृ
दांताड (न.) दन्तपङ्क्तिः
दाद (फा. स्त्री.) न्यायः
दादर ( पु. ) दारुनिःश्रेणिः
दादरा ( पु.) १ तालविशेषः
२ दृढवस्त्रबन्धः
दान ( न. ) त्यागः, दानम्
दानशूर ( वि. ) वदान्य, बहुप्रद
दांपत्य ( न. ) मिथुनं, द्वन्द्वम्
दाब ( पु.) पीडनं, संयामः
दाबणें (क्रिया.) निस् + पीड्
दाभण ( स्त्री. ) वेधनी, वेधनम्
दाम (पु.) मूल्यम्
दार (न.) द्वारम्, निर्गमः,
दारू (स्त्री.) मदिरा, मद्यं
दारू गाळणें (क्रिया.) मद्यं सम् + धा (३ उ.)
दारूबाज ( वि. ) मद्यासक्तः, सुरासक्तः
दारुहळद (स्त्री.) दारुहरिद्रा
दारुण (वि.) तीव्र, दारुण,
दालचिनी (स्त्री.) चोचम्, गुडत्वच्
दालन (न.) कक्षा
दावण (स्त्री ) पशुरज्जुः
दावा (अर. पु.) १ द्वेषः, वैरं, शत्रुत्वम्
२ वादः, व्यवहारः
दावें (न.) दामन्, बन्धनम्
दास(पु.) प्रेष्यः, भुजिष्यः, दासः
दासी (स्त्री.) दासी, भुजिष्या, चेटी
दास्तान (फा. न.) कोष्ठागारम्, संग्रहस्थानम्
दाह (पु.) संतापः प्लोषः, दाहः
दाहक (वि.) तप्त, दाहक
दिक्कत (अर. स्त्री.) आशङ्का, संशयः
दिखाऊ (वि.) आपातरमणीय
दिगंबर ( वि. ) विवसन, अनम्बर, नग्न
दिडकी ( स्त्री. ) कपर्दिका, क्षुद्रनाणकम्
दिंडी (स्त्री.) १ भजनसमितिः
२ द्वारप्रवेशिका
३ छन्दोविशेषः
दिपुष्ट (न.) निर्वाणदीपतैलम्
दिमाख (अर.पु.)दर्पः, अभिमानः
दिल (फा. पु. न.) मनः, अन्तःकरणम्
दिलखुलास (पु.) मनःप्रसादः
दिलगिरी (फा. स्त्री. ) खेदः, मनःक्लेशः
दिलगीर (वि.) दुर्मनस्, विमनस्
दिलदार (वि.) उदार, दक्षिण
दिलासा( पु. )आश्वासनं,उत्तेजनम्
दिवटा (पु.) १ तैलदीपः
२ दीपधारकः
३ कुलकलङ्कः

दिवटी (स्त्री.) दीपिका
दिवस (पु.) दिनं, दिवसः
दिवसा (अव्यय) दिवा, दिने,
दिवा (पु.) दीपः,
दिवाण (पु.) मन्त्री, अमात्यः
दिवाणखाना (पु.) आस्थानम्,
दिवार,दिवाल (फा.स्त्री.) भित्तिः,
दिवाळी (स्त्री.) दीपोत्सवः, दीपावलिः
दिवाळखोर (वि.) ऋणापाकरणाक्षम
दिवाळें (न) ऋणापाकरणाक्षमता
दिशा (स्त्री.) दिक्, ककुभ्
दिसणें (क्रिया.) प्रति+भा (प.)
दीड (वि.) अर्धार्ध, सार्ध
दीडशे (सं) सार्धशतम्
दीन (वि.) तपस्विन्, दीन, दरिद्र
दीपमाळ (स्त्री.) दीपमाला, दीपवृक्षः
दीर (पु.) देवरः
दीक्षा (स्त्री.) दीक्षा
दुआब (दोआब) (फा. पु.) द्वीपः, अन्तरीपः
दुकान (न.) आपणः, विपणिः
दुक्कल (स्त्री.) द्वयं, द्वितयम्
दुःख (न.) व्यथा, पीडा, दुःखम्
दुखापत (स्त्री.) पीडा, बाधा
दुःखी (वि.) पीडित, खिन्न
दुजा (वि.) द्वितीय
दुजोरा (पु.) द्रढिमा, समर्थनम्
दुटप्पी (वि.) द्व्यर्थिन्, वाक्छलिन्
दुतर्फा (अ.) उभयतः
दुतोंड्या (वि.) द्विमुख
दुध्या (पु.) कर्कः, कर्कटः
दुपटें (न.) शिशुवस्त्रम्
दुपार (स्त्री.) दिनयौवनम्, मध्याह्नः
दुपारी (अव्यय) मध्याह्ने
दुप्पट (स्त्री.) द्विगुणम्
दुफळी (स्त्रीः) १ द्वैपक्षम् २ कलहः
दुबळा (वि.) दुर्बल, क्षाम, कृश
दुभंगलेला (वि.) दारित, भिन्न, छिन्न
दुभती (वि.) दुग्धद, दोग्धृ
दुभागणें (क्रिया.) वि + भज् (१ आ.)
दुमजली (वि) द्विभूम
दुभाषी (वि.) द्वैभाषिक
दुमडणें (क्रि.) पुटीकृ (८ प.)
दुय्यम (वि.) द्वितीय, गौण
दुरापास्त (वि.) असंभाव्य, अतिदुर्लभ
दुरुस्ती (स्त्री.) पूर्ववत्कृतिः उद्धारः
दुरून (अव्यय) दूरतः
दुर्गंध (पु.) पूतिः, दुर्गन्धः
दुर्गा (स्त्री.) अपर्णा, पार्वती, दुर्गा
दुर्जन (पु.) दुर्जनः
दुर्दैव (न.) दुर्भाग्यम्
दुर्मिळ (वि.) दुर्लभ, कष्टप्राप्य
दुर्लक्ष (न.) शैथिल्यं, प्रमादः, अनवधानता
दुर्वर्तनी (वि.) दुराचार, दुर्वृत्त
दुलई (स्त्री.) नीशारः, तूलप्रच्छदः
दुवा (पु.) आशीर्वचः, अभीष्टचिन्तनं

दुष्मन (फा. पु.) अरिः, शत्रुः
दुसरा (वि.) द्वितीय
दुःसाध्य (वि.) असाध्य
दुही (स्त्री.) १ द्वैपक्षम्
२ कलहः, वैरम्
दूत (पु.) दूतः, संदेशहरः
दूती (स्त्री.) दूती, प्रेष्या
दूध (न.) दुग्धं, पयः
दूध काढणें (क्रिया) दुह (२उ.)
दूधखुळा (वि.) अज्ञ, बालिश
दूर (अव्यद) दूरं, दूरे, दूरेण
दूर्वा (स्त्री.) दूर्वा, सहस्रकाण्डा
देऊळ (न.) देवालयः, मन्दिरम्
देखणा (वि.) दर्शनीय, कमन
देखत (अव्यय) समक्षम्
देखरेख (स्त्री.) निरीक्षणं, अवेक्षणम्
देखावा (पु.) प्रेक्षणीयकम्
देठ (नः) वृन्तं, बन्धनम्
देणगी (स्त्री.) दानं, वितरणम्
देणे (न.) ऋणं
देणेकरी (पु.) अधमर्णः
देव (पु.) ईश्वरः, देवः
देवक (न.) देवकम्
देवडी (स्त्री.) देहली
देवाज्ञा (स्त्री.) मृतिः मरणम्
देशोधडी (देशधडी) (स्त्री.) भिक्षावृत्तिः
देशमुख (पु.) प्रदेशाधिकृतः
देशावरी (स्त्री.) भिक्षावृत्तिः
देसाई (पु.) प्रदेशाधिकारिन्
दैना (स्त्री.) दैन्यं, दुर्दशा
दोनप्रहर (पु.) मध्याह्नः
दोर (पु.), रज्जुः
दोरा (पु.) दोरकः, सूत्रम्
दोस्त (फा. पु.) मित्रं, सखा, सुहृद्
दौड (स्त्री.) द्रुतगतिः, त्वरितगतिः
दौरा (पु.) पर्यटनं, परिभ्रमणं, संचारः
दौलत (अद-स्त्री.) संपत्तिः, ऐश्वर्यम्
दौलतदार (वि.) धनिक, श्रीमत्
द्रव (पु.) द्रवः, रसः
द्वाड (वि.) दुष्ट, नीच
द्वारा (अ.) द्वारा, द्वारेण
द्वाही (स्त्री.) आघोषणा
द्विस्त (वि.) संयुक्त

## ध

धक (ग) (स्त्री.) दाहः, प्लोषः
धकाधकी (स्त्री.) संमर्दः
धकाबुकी (स्त्री.) संमर्दातिशयः
धक्का (पु.) १ आघातः, प्रहारः
२ घट्टः, नौस्थलम्
धगधगीत (वि.) प्रज्वलित, प्रदीप्त
धजणें (क्रिया.) धृष् (५ उ.)
धटिंगण (वि.) धृष्ट, वियात
धट्टाकट्टा (वि.) दृढ, पुष्ट
धड (न) कबन्धः
(वि.) समग्र, सकल
(अ.) स्पष्टम्
धडक (स्त्री.) समाहतिः
धडकी (स्त्री.) भीतिः, भयम्
धडगत (स्त्री.) दृढस्थितिः
धडधडीत (अ.) सुस्पष्टं, समक्षम्

धडधाकट (वि) पुष्ट, दृढाङ्ग
धडपड ( स्त्री. ) परिश्रमः, संवेगः
धडा (पु.) १ पाठः
२ रीतिः, पद्धतिः
३ आदर्शः
धडाका (पु.) अविरतक्रिया
धडाडी ( स्त्री. ) धाष्ट्र्यं, धृतिः
धडोती ( स्त्री. ) स्थूलवस्त्रम्
धड्ड (वि.) मन्द, जड
धडी( स्त्री. ) चतुष्कीलं, मानविशेषः
धण (स्त्री.) लाभः, वृद्धिः
धणी ( पु. ) स्वामिन्, धनिन्
धतुरा (पु.) प्रतारणा, वञ्चना
धंदा (पु.) वृत्तिः, जीविका
धंदेवाईक (वि.) व्यावसायिक
धन (न.) १ द्रव्यं, धनं, संपत्तिः
२ धनूराशिः
धनकुली (स्त्री.) क्षुद्रधनुः
धनतेरस (स्त्री.) धनत्रयोदशी
धनदौलत (स्त्री.) ऐश्वर्यं, ऋद्धिः
धनीण ( स्त्री. ) स्वामिनी, धनिनी
धने (पु.) (ब.) धान्याकम्
धनेश्वर ( वि. ) इभ्य, आढ्य
धपकन् (अ.) धप इति
धपाटा (पु.) प्रहारः, पाणिघातः
धप्पाधप्पी (स्त्री.) कन्दुकक्रीडा
धन्य ( वि. ) सुकृतिन्, पुण्यवत्, धन्य
धन्यवाद (पु.) धन्यवादः
धमक (स्त्री.) धृतिः, धाष्ट्र्यम्
धमकावणी (स्त्री.) बिभीषिका
धरबंद (पु.) १ मर्यादा
२ शासनम्
धरणें (क्रिया.) ग्रह
( न. ) निर्बन्धः, आग्रहः

धरणेकरी (पु.) निर्बन्धकः
धरपकड (स्त्री.) ग्रहः रोधः
धरसोड (स्त्री.) धरत्यागौ,
ग्रहमुचौ
धरून (अ.) प्रभृति, आदि
धर्म (पु.) १ धर्मः
२ कर्तव्यम्
धर्मलंड ( वि. ) नास्तिक, अधार्मिक
धर्मशाळा (स्त्री.) धर्मशाला,
यात्रिकगृहम्
धर्मांतर (न.) परधर्मस्वीकारः,
धर्मान्तरम्
धर्मादाय (पु.) दानं, त्यागः
धर्मार्थ (अ.) विना मूल्यम् ,
धर्मार्थम्
धश्चोट ( वि. ) पशुतुल्य, व्रात्य, धृष्ट
धस्स होणें (क्रि.) भी. (३ उ.)
धसमुसळा( वि. ) अविमृश्यकारिन्
धाक (पु.) भीतिः भयम्
धाकटा (वि.) कनीयस्
धाकधुकी ( स्त्री. ) आशङ्का,
धांगडधिंगा (पु.) उपद्रवातिशयः
धागा ( पु. ) दोरकः, सूत्रम्
धागादोरा (पु.) संबन्धः,
सूक्ष्मान्वयः
धाटणी (स्त्री.) पद्धतिः, रीतिः
धाड (स्त्री.) आक्रमणम्,
अवस्कन्दः
धाडकन् ( अ. ) धाड् इति
धाडणें (क्रि.) प्र + हि (५ उ.)
धाडस (न.) साहसं
धातु (पु.) १ वीर्यं, तेजः, रेतः
२ (सुवर्णादि) धातुः
३ (रक्तादि) धातुः

**धांदल** (स्त्री.) त्वरा, संभ्रमः
**धांदलणें** (क्रि.) पर्याकुली + भू (१ प.)
**धादांत** (वि.) सर्वथा, संपूर्णतया
**धान्य** (न.) धान्यं, सस्यम्
**धान्यफराळ** (पु.) भर्जिताहारः
**धाप** (स्त्री.) १ शीघ्रोच्छ्वासः, २ कासः, श्वासः
**धाबें** (न.) मृच्छदिः, मृत्पटलम्
**धामधूम** (स्त्री.) १ संकुलता २ आक्रोशः ३ कोलाहलः
**धाय** (स्त्री.) १ विलापः, परिदेवनम् २ भीतिः, भयम्
**धार** (स्त्री.) १ धारा २ प्रवाहः ३ अश्रिः, कोटिः, पालिः ४ दोहनम्
**धारण** (स्त्री.) मूल्यपरिमाणं (न.) स्वीकारः, अङ्गीकारः
**धारा** (स्त्री.) क्षेत्रदायः, क्षेत्रभागः
**धारातीर्थ** (न.) रणाङ्गणं, युद्धभूमिः
**धारिष्ट** (न.) धैर्यं, धाष्ट्र्यम्
**धांव** (स्त्री.) १ प्रधिः, नेमिः २ धावनिः
**धावा** (पु.) उत्कटप्रार्थना
**धिक्कार** (पु.) धिक्कृतिः, धिक्कारः
**धिंड** (स्त्री.) सनिकारपरिभ्रामणम्, गर्दभारोपणादि
**धिप्पाड** (वि.) दृढतर, पुष्टतम
**धिरडें** (न.) छिद्रापूपः
**धीट** (वि.) धैर्यशालिन्, अभीरु
**धीर** (वि.) सहनः, मर्षणः (पु.) धैर्यं, धृतिः
**धीवर** (पु.) दाशः, धीवरः,
**धुगधुगी** (स्त्री.) क्षीणतरप्राणाः, आसन्नमरणता
**धुंडाळणें** (क्रिया.) अनु + इष् (४ प.) मार्ग् = (१० प.)
**धुणावळ** (स्त्री.) प्रक्षालनभृतिः
**धुणी** (स्त्री.) १ प्रक्षालनस्थलम् २ प्रक्षालयनिचयः
**धुणें** (क्रिया.) प्र + क्षल् (१० प.)
**धुंद** (वि.) मत्त, नष्टसंज्ञ, मूर्छित
**धुंदी** (स्त्री.) उन्मादः
**धुनी** (स्त्री.) कारीषाग्निः
**धुपणें** (क्रिया.) तनू + भू निस् + तक्ष् (१ प.)
**धुपविणें** (क्रिया.) धूपय
**धुपाटणें** (न.) धूपपात्रम्
**धुमश्चक्री** (स्त्री.) १ तुमुलता, संकुलता २ संमर्दातिशयः
**धुमाकूळ** (पु.) कोलाहलः, विप्लवः
**धुमारा** (पु.) अङ्कुरः
**धुमाळी** (स्त्री.) कोलाहलः, संकुलता, तुमुलम्
**धुरंधर** (वि.) धौरेय, धूर्वह
**धुराडें** (न.) धूम्रनिर्गमः, धूम्रपथः
**धुलाई** (स्त्री.) क्षालनमूल्यम् क्षालनभृतिः

धुवट (वि.) धौत, क्षालित
धुसफूस (स्त्री.) अन्तःसंतापः, अन्तःसंक्षोभः
धुळदाण (स्त्री.) वाताहतिः, दुरवस्था
धुळवड (स्त्री.) धूल्युत्सवः, धूलिवन्दनम्
धुळाक्षर (न.) धूल्यक्षरम्
धूड (न.) स्थूलदेहः
धूप (पु.) धूपः
धूर (पु.) धूम्रः
धूळ (स्त्री.) धूलिः, पांसुः, रजः
धूळभेट (स्त्री.) धूलिसंगतिः
धेडगुजरी (वि.) मिश्रभाषा
धोका (न.) भयं
धोंडा (पु.) पाषाणः, ग्रावा, शिला
धोंडमास (पु.) अधिकमासः
धोतर (न.) वस्त्रं, वसनं, चेलम्
धोतरा (पु.) धत्तूरः
धोपटमार्ग (पु.) सरलपथः, न्याय्यमार्गः
धोपटी (स्त्री.) नापितपेटिका
धोबी (पु.) रजकः, निर्णेजकः
धोरण (न.) पद्धतिः, सरणिः
धोरणी (वि.) चतुर, धूर्त, चाणाक्ष
धोशा (पु.) निर्बन्धः, अत्याग्रहः
ध्यास (पु.) १ तीव्रेच्छा, उत्कटेच्छा २ संततचिन्तनम्
ध्वज (पु.) ध्वजः, पताका
ध्वनिशास्त्र (न.) शिक्षा, ध्वनिशास्त्रम्

## न

न (अ.) न
नऊ (संख्या) नव
नकल (स्त्री.) प्रतिलिपिः प्रतिरूपम्
नक्कल (स्त्री.) अनुकृतिः
नकली (वि.) कृत्रिम, कृतक
नकल्या (वि.) अनुकृतिनिपुण, अनुकरणपटु
नकशी (स्त्री.) पत्राद्याकृतिः, (नक्षी)
नकशा (पु.) गर्वः, दर्पः, अहंकारः
नकाशा (पु.) मानचित्रम्, देशालेख्यम्
नक्की (अ.) निश्चयेन, अद्धा
नखरा (पु.) विभ्रमः, विलासः, हावः
नखभर (स्त्रि.) नखमित
नखी (स्त्री.) नखत्राणम्
नग (पु.) (१) अलंकारः, आभरणम् (२) पर्वतः, नगः
नगद (अस्न.) नाणकम्
नगर (न.) नगरं, नगरी
नंगा (वि.) नग्न, विवस्त्र, दिगम्बर
नंगानाच (पु.) स्वाच्छन्द्यम्
नगारखाना (पु.) दुन्दुभिगृहम्
नगारा (पु.) दुन्दुभिः
नजर (स्त्री. अरबी) १ दृष्टिः, २ उपायनं
नजरबंदी (स्त्री.) इन्द्रजालं, मायाजालम्

**नजराणा** (पु. फारसी) उपायनं, प्राभृतम्
**नजरानजर** (स्त्री.) दूरदर्शनम्, दृष्टादृष्टम्
**नजीक** (अ.) समीपे, निकटम्
**नट** (पु.) नटः, नर्तकः
**नटी** (स्त्री.) नटी, नर्तकी
**नटून थटून** (अ.) सविलासम्
**नणंद** (स्त्री.) ननान्दृ
**नतद्रष्ट** (वि.) (१) कृपणतम (२) दुष्टतर
**नंतर** (अ.) अनन्तरं, अथ
**नथ** (स्त्री.) नासाभरणम्, नासामुक्तकम्
**नफा** (अर. पु.) लाभः, आयः
**नंदादीप** (पु.) संततदीपः
**नदी** (स्त्री.) नदी, निम्नगा, आपगा
**नंदी** (पु.) १ नन्दिकेश्वरः, शिववाहनम्
२ वृषभः, बलीवर्दः
३ मूर्खः, अज्ञः
**नंबर** (पु. इं.) १ अनुक्रमः, परिपाटी
२ संख्या
**नमाज** (फार. पु.) यवनप्रार्थना, नमाजः
**नमुना** (पु.) १ आदर्शः, प्रतिमा
२ प्रतिमानं, उपमानम्
**नमूद** (फारसी वि.) विलिखित
**नरडी** (स्त्री.) गलः, कण्ठः
**नराणी** (स्त्री.) नखनिकृन्तनी
**नरम** (फारसी वि.) मृदु, सौम्य
**नरमाई** (फारसी स्त्री.) मार्दवं, सौम्यता
**नरमादी** (फारसी) स्त्रीपुंसौ, मिथुनम्
**नरसोबा** (पु.) नरसिंहः
**नरोटी** (स्त्री.) नारिकेलत्वक्, श्रीफलावरणम्
**नर्स** (इं. स्त्री.) १ धात्री
२ परिचारिका
**नवखा** (वि.) नव, नवीन, नूतन
**नवल** (न.) आश्चर्यम्, विस्मयः
**नवस** (पु.) नमस्यम्
**नबाब** (अरबी. पु.) प्रान्ताधिपः
**नशा** (अरबी.स्त्री.) मदः, क्षीबता
**नशीब** (न.) दैवं, भाग्यं, नियतिः
**नष्टचर्य** (न.) दुरदृष्टं, दुर्भाग्यम्
**नशीबवान्** (वि.) भाग्यवत्, अदृष्टशालिन्
**नस** (अरबी स्त्री.) शिरा, धमनिः
**नसराणी** (वि.) धूर्त, वञ्चक
**नहर** (अर. पु.) कुल्या, परीवाहः
**नहाण** (न.) रजोदर्शनम्
**नळी** (स्त्री.) नलिका
**नाक** (न.) १ नासिका, घ्राणम्
२ सूचिच्छिद्रम्, सूचिरन्ध्रम्
**नाक कापणें** नासिकां कृत् (६प.) गर्वं अप्+हृ १ प.)
**नाक घांसणें** नासिकां भूमौ घट्टय् शरणं आ+गम् (१प.)
**नाक ठेंचणें** नासां कुट्टय् दण्ड् (१० प.)
**नाकपुडी** (स्त्री.) नासापुटम्
**नाकबूल** (फा.वि.) असंमत,अमत

**नाकाड** ( न. ) स्थूलनासिका
**नाकारणें** ( क्रिया. )
निर् + आ + कृ ( ८ उ. )
**नाकें** ( न. ) १ केन्द्रम्, महास्थलम्
२ आयचयः
**नाकेंबंदी** ( स्त्री. ) मार्गोपरोधः,
मार्गसंरोधः
**नाकेला** ( वि. ) दीर्घनासिक,
सुनासिक
**नाखवा** ( फा. पु. ) नौप्रमुखः,
नौकाधिकृतः
**नाखूष** ( वि. ) अप्रसन्न, असंतुष्ट
**नाग** ( पु. ) नागः, सर्पः
**नागमोडी** ( वि. ) कुटिल, अराल,
जिह्म
**नांगर** ( पु. ) हलः, लाङ्गलम्, सीरः
**नागरमोथा** ( पु. ) मुस्ता, मुस्तकम्
**नागवणें** ( क्रिया. ) धनादिकं
अप+हृ ( १ प. )
**नागवा** ( वि. ) नग्न, दिगम्बर,
अवस्त्र
**नांगी** ( स्त्री. ) वृश्चिकपुच्छम्
**नागीण** ( स्त्री. ) सर्पिणी, उरगी,
भुजगी
**नाच** ( पु. ) नृत्यं, नर्तनं, लास्यम्
**नाचक्की** ( स्त्री. ) अवहेलना,
अवज्ञा
**नाचणी** ( स्त्री. ) नीवारः,
तृणधान्यम्
**नाचणें** ( क्रिया. ) नृत् ( ४ प. )
**नाजूक** ( वि. ) कोमल, सुकुमार
**नाटक** ( न. ) नाटकम्
**नॉटपेड** ( इं. वि. ) अदत्तमूल्य
**नाठाळ** ( वि. ) दुष्ट, नीच

**नाणें** ( न. ) नाणकम्
**नात** ( स्त्री. ) नप्त्री
**नातलग** ( पु. ) संबन्धिन्, बन्धुः,
ज्ञातिः
**नातवंड** ( न. ) दौहित्रः, पौत्रः
**नातसून** ( स्त्री. ) नप्तृजाया
**नातू** ( पु. ) नप्तृ
**नातें** ( न. ) सम्बन्धः, यौनसंबन्धः
**नाद** ( पु. ) १ ध्वनिः, शब्दः, नादः
२ आसक्तिः, व्यसनम्
**नांदणें** ( क्रिया. ) सुखेन वस् ( १ प. )
**नादान** ( फा. वि. ) दुर्बल, असमर्थ
**नादार** ( फा. वि. ) ऋणशोधनक
**नादारी** ( फा. स्त्री. )
१ आधमर्ण्यम्
२ शुल्कमुक्तिः
**नापसंत** ( वि. ) असंमत, अनभिमत
**नापास** ( वि. ) अनुत्तीर्ण
**नामर्द** ( फा. वि. ) पौरुषहीन, दुर्बल
**नामशेष** ( वि. ) स्मृतिशेष, नामशेष
**नामदार** ( वि. ) सांसदिक
**नामांकित** ( वि. ) विख्यात, प्रसिद्ध
**नामी** ( वि. ) उत्कृष्ट, स्मरणीयतर
**नामुष्की** ( फा. स्त्री. ) अपमानः,
अवज्ञा
**नायक** ( पु. ) १ अधिभूः, प्रमुखः,
नेता
२ नायकः ( नाट्यादौ )
**नायटा** ( पु. ) दद्रूः, खर्जूः
**नायनाट** ( पु. ) विनाशः, विध्वंसः
**नायब** ( अर. पु. ) प्रतिनिधिः,
सहायकः
**नार** ( स्त्री. ) नारी, स्त्री, अबला
**नारळ** नारिकेलम्, श्रीफलम्

**नाराज** (फा. वि.) अप्रसन्न, खिन्न
**नाल** (अर. पु.) खुरत्रं, खुरत्राणम्
**नालस्ती** (फा. स्त्री.) निन्दा, परीवादः
**नाला** (पु.) १ निर्झरः, झरः
२ पूतिकुल्या
**नाव** (स्त्री.) नौः, तरणिः, नौका
**नांव** (न.) नामन्, आख्या, नामधेयम्
**नावड** (स्त्री.) अरुचिः, अप्रीतिः
**नावडता** (वि.) अप्रिय
**नांवनिशाण** (फा. न.) नामचिह्नम्, नामाङ्कनम्
**नांवनिशी** (फा. स्त्री.) नाममाला
**नांवलौकिक** (पु.) ख्यातिः, प्रथा, प्रसिद्धिः
**नावाडी** (पु.) नाविकः
**नाशवंत** (वि.) नश्वर, अशाश्वत, भङ्गुर
**नाष्टा** (फा. पु.) प्रातराशः
**नासका** (वि.) अमेध्य, कुत्सित, पूतियुत
**नाहक** (फा. अ.) अकारणम्, मुधा, वृथा
**नाळ** (स्त्री.) नालः, नाभिनाडिः
**निकट** (अ.) समीपे, निकटं, आसन्नम्
**निकटवर्ती** (वि.) बन्धुः, ज्ञातिः
**निकड** (स्त्री.) १ त्वरा
२ अत्याग्रहः
**निखारा** (पु.) अङ्गारः
**निखालस** (वि.) शुद्ध, पूत, मेध्य
**निगडित** (वि.) संबद्ध, संपृक्त, अन्वित
**निगा** (फा. स्त्री.) पर्यवेक्षणम्, परीक्षा
**निघंट** (पु.) निघण्टुः, कोशः
**निचरा** (पु.) निर्गलनम्, निर्गमः
**निजणें** (क्रिया.) स्वप् (२ प.)
शी (२ आ.)
**निटळ** (न.) निटिलं, कपालम्
**नितळ** (वि.) श्लक्ष्ण, मृदु
**निदानपक्षी** (अ.) न्यूनान्न्यूनम्
**निधडा** (वि.) धृष्ट, वियात
**निनावी** (वि.) अनामक, निर्नामन्
**निपचित** (वि.) निश्चेष्ट
**निपणजा** (पु.) प्रप्रपितामहः
**निपणतु** (पु.) प्रप्रपौत्रः
**निबर** (वि.) दृढ, कठिन, दुश्छेद्य
**निभ्रांत** (वि.) विशङ्क, निर्भय
**निंबोणी** (स्त्री.) १ निम्बफलम्
२ पिचुमन्दः, निम्बः
**निमक** (फा. न.) लवणम्
**निमकहराम** (फा. वि.) कृतघ्न, अकृतज्ञ
**निरगांठ** (स्त्री.) दृढग्रन्थिः
**निरंतर** (अ.) सततं, अनारतं, निरन्तरम्
**निरगांठ** (स्त्री.) दृढग्रन्थिः
**निरर्गल** (वि.) १ निष्प्रतिबन्ध
२ अवाच्य
**निरर्थक** (वि.) निरर्थक, निष्फल, निष्प्रयोजन
**निरसें** (वि.) अशृत, (दुग्धं)
**निरशन** (न.) अनशनं, उपोषणम्
**निराळें** (वि.) भिन्न, पृथक् (अ.)
**निरी** (स्त्री.) नीवी

**निरूपण** ( न. ) विवेचनं, विशदीकरणं, निरूपणम्
**निरोप** ( पु. ) १ संदेशः, वाचिकम्
२ निर्गमानुज्ञा
**निर्जन** ( वि. ) विजन, विविक्त
**निर्दालन** ( न. ) समूलोच्छेदः
विध्वंसः
**निर्दोषी** ( वि. ) शुद्ध, अपाप,
निरपराध
**निर्धार** (पु.) निश्चयः, प्रतिज्ञा
**निर्धास्त** ( वि. ) निर्भय, अभय
**निर्बंध** (पु.) १ निर्बन्धः, आग्रहः
२ मर्यादा, नियमः
**निर्भीड** (वि.) १ निःस्पृह
२ निर्भीक
**निर्माल्य** ( न. ) १ निर्माल्यम्
२ निस्तेजस्, पौरुषहीनः
**निर्मूलन** ( न. ) समूलोच्छेदः,
विध्वंसः
**निर्वंश** (पु. )कुलक्षयः, कुलोच्छेदः
**निर्वासित** ( वि. ) निर्वासित,
निष्कासित
**निर्वाळा** ( पु. ) १ निश्चयः
२ निर्दोषत्वम्
**निर्विवाद** ( वि. ) असंशय,
निश्चययुत
**निवळ** (अ.) केवलम्
**निवळणें** (क्रि.) निर्मलीभू ( १प. )
स्वच्छतां या ( २प. )
**निवळी** ( स्त्री. ) मस्तु
**निवळीचें बी** कतकम्
**निवाडा** (पु.) निर्णयः
**निवात** ( वि. ) शान्त, उपद्रवरहित
**निवारा** ( पु. ) गृहं, निवासः
**निवृत्ति** ( स्त्री. ) १ परावर्तनं,
निर्गमः
२ निवृत्तिः, वैराग्यम्
**निवेदन** ( न. ) १ कथनं, वचनं,
उक्तिः
२ समर्पणं, निवेदनम्
**निःशंकपणें** ( क्रि. वि. ) निर्भीकतया
निःशङ्कम्
**निशाण** ( फा. न. ) ध्वजः, पताका
**निशाणी** ( स्त्री. फा. ) चिह्नं, अङ्कः
**निशिदिनी** ( अ. ) रात्रिंदिवं,
अहर्दिवम्
**निशी** ( अ. ) सह, सार्धं, साकम्
**निषेध** ( पु. ) १ प्रतिबन्धः,
प्रतिषेधः
२ अस्वीकारः, निराकृतिः
**निष्कर्ष** ( पु. ) सारः, तात्पर्यं,
निर्गलितार्थः
**निःपक्षपात** ( पु. ) समपक्षपातिता,
समवृत्तित्वम्
**निष्पक्षपाती** ( वि. ) समदृष्टि,
समपक्षपातिन्
**निसटणें** ( क्रिया. ) निस् + सृ
( १ प. )
**निस्तरणें** ( क्रिया. ) १ निर् + वह्
( १ प. )
२ पापफलं अनु + भू ( १ प. )
**निहाय** ( अर. अ. ) प्रत्येकं,
प्रतिव्यक्ति
**नीच** ( वि. ) १ क्षुद्र
२ अधम, नीच, पतित
**नीज** ( स्त्री. ) निद्रा, स्वापः
**नीट** ( वि. ) सुव्यवस्थित,
समीचीन

तत्रापि तावधानत्वात् सङ्ग्रामकुशलोऽपि सः ।
कुतस्त्येनापि बाणेन हन्त मर्मणि निर्हतः ॥६८॥
सहस्रव्रणनिस्तष्टसर्वगात्रः स वीर्यवान् ।
विद्धस्तेनेषुपातेन पातितो बत भूतले ॥६९॥
निपातमात्मनो दृष्ट्वा निर्धैर्या मा स्म भूच्चमूः ।
इति प्रोच्चशुष्ककण्ठोऽपि जगर्ज रणघोषणाः ॥७०॥
तं तथाभूतमालोक्य केचित् तदनुयायिनः ।
उत्सृज्य शत्रुसंहारं परितस्तस्थुराकुलाः ॥७१॥
शेषास्तु बाजिसंदेशं स्मारं स्मारं पदे पदे ।
असंख्यारिसमाक्रान्ता अप्ययुध्यन्त सन्ततम् ॥७२॥
तेषु प्रत्येकमाहत्य शतानि शिवविद्विषाम् ।
विच्छिन्नसर्वगात्रोऽपि न विश्रमितुमैहत ॥७३॥
समुत्थातुमशक्तोऽपि स बाजिर्विलुठन् भुवि ।
भृशं प्रायततोत्थाय पुनः सङ्ग्रामकेलये ॥७४॥
उवाच क्षामकण्ठोऽसौ सुहृदः परितः स्थितान् ।
क्लिन्ननेत्रान् खिन्नवक्त्रांस्तदवस्थाविलोकनैः ॥७५॥
"एष आह्वयते मृत्युः परलोकाय मामितः ।
असमाप्य तु कर्तव्यं न त्यजेयं कलेवरम् ॥७६॥
स्वामिनः कुशलावेदी शतघ्नीध्वनिरुच्चकैः ।
यावत्कर्णपथं नेयान्न त्यजेयं कलेवरम् ॥७७॥
नैवेदानीमलं भूयात् तव मृत्योऽखिलं बलम् ।
मम प्राणानितो हर्तुं स्वाम्यर्थं हि जिजीविषोः ॥७८॥
रुधिराक्लिन्नमेतन्मे कायमस्तुमिहागताः ।
गृध्रा गच्छत वृत्तान्तं ज्ञातुं मे स्वामिनो द्रुतम् ॥७९॥
स्वामिनः कुशलं श्रुत्वा स्वयं जह्यामिदं वपुः ।
युष्माकमेव तृप्त्यर्थं न मे प्रीतिः कलेवरे ॥८०॥
न हि शस्त्रव्रणैरेतैरल्पीयस्यपि मे व्यथा ।
ध्वनिप्रतीक्षया किन्तु सैवात्यन्तगरीयसी ॥८१॥
निश्वासा यात रे दूरं वायुवेगेन सत्वरम् ।
शिवराजशुभोदन्तं मामावहत बान्धवाः ॥८२॥
इत्थं प्रतिक्षणमसावतिविह्वलात्मा
विच्छिन्नमूर्तिरशृणोत् सहसा ध्वनिं तम् ।
कर्तव्यपूर्तिसुखमात्मनि तेन विन्दन्
शैवं पदं हि शिवमग्नमना जगाम ॥८३॥

**॥ इति श्रीशिवराज्योदये महाकाव्ये बाजिहौतात्म्यं नाम ३८ तमः सर्गः समाप्तः ॥**

## ॥ श्रीशिवराज्योदये महाकाव्ये ३९ तमः सर्गः ॥

## ॥ जीवदानम् ॥

लब्धप्रवेशोऽथ विशालदुर्गे शीघ्रं पराजित्य हि सूर्यरावम् ।
प्रतीक्षमाणः स्वसुहृद्गणं तं ददर्श चारं पुरतः शिवाजिः ॥१॥
उदन्तजातं समरस्य तस्माद् आकर्ण्य हर्षाकुलमानसोऽपि ।
यशोऽवशेषं सुहृदं विदित्वा वज्राहतिं सोऽनुबभूव घोराम् ॥२॥
तस्मिन् क्षणे तस्य सुहृद्वरस्य सा मूर्तिरत्युत्कटभक्तिभाजः ।
दिव्यौजसा भूरि परिस्फुरन्ती शिवेन सास्रं ददृशेऽन्तरङ्गे ॥३॥
वाणी तदीया विशदाक्षरा च सुव्यक्तमन्तः श्रवणेन्द्रियेण ।
संश्रूयमाणाऽद्भुतभावरम्या न्यमज्जयन्मोहमहाम्बुधौ तम् ॥४॥
"स्वामिन्! मयात्यल्पबलेन चापि त्वद्भक्तिसंप्रेरितदिव्यशक्त्या ।
कल्पान्तवातेरितसागरोत्थकल्लोलकल्पा रिपवो निरुद्धाः ॥५॥
परन्तु हा हन्त! तनुर्ममेयं त्वदन्नपुष्टापि कृतघ्नभूता ।
त्वदीयकल्याणविबोधकं तं ध्वनिं ह्यनाकर्ण्य भुवं प्रपन्ना ॥६॥
प्राणा इमे प्राप्तविमूढभावाः भृशत्वरास्त्यक्तुमिमां तनूं च ।
निरोधिता भूरिपरिश्रमेण मयारिसंघातवदेव देव ॥७॥
इत्थं सुकार्ये महति त्वदीये जातः प्रमादः खलु यः कथञ्चित् ।
तत् प्रार्थये भूतलनम्रशीर्षः क्षमस्व तं देव ममापराधम् ॥८॥
इतीरयित्वा गिरमार्तनेत्रा तेजोमयी साद्भुतबाजिमूर्तिः ।
अर्चिष्मता दिव्यपथेन यान्ती शिवेन भक्त्या सुचिरं ववन्दे ॥९॥
बद्धाञ्जलिर्निर्गलदश्रुनेत्रः विलुप्तनैसर्गिकसुस्मितोऽसौ ।
मुहुः श्वसन् दीर्घतरं शिवाजिः सुहृद्गणैर्दूनतरैर्व्यलोकि ॥१०॥
विशालदुर्गे कतिचिद्दिनानि कृत्वा निवासं स यशोनिवासः ।
निजात्मजापद्भिरजस्रदूनां तां मातरं द्रष्टुमना बभूव ॥११॥
महत्तमापत्ति-नितान्तमग्न-स्वपुत्र-कल्याणनिमित्तमेव ।
निरन्तरं दैवतवृन्दपूजाव्यग्रामिमां राजगडे ददर्श ॥१२॥
प्राणप्रियं तं प्रणतोत्तमाङ्गं प्रमोदजन्याश्रुजलार्द्रनेत्रम् ।
ददर्श पुत्रं वनवासकृच्छ्रैः सा कर्षिताङ्गं रघुनन्दनाभम् ॥१३॥
निरस्तदुष्टारितमःप्रभावं यशःप्रभाव्यापितदिग्वितानम् ।
तृषातुराक्षणा सुतमीक्षमाणा दीपोत्सवं मूर्तमसौ ददर्श ॥१४॥
तद्दर्शनोत्फुल्लितचित्तवल्ली सा शृण्वती पुत्रनिवेदितास्ताः ।
सङ्ग्रामकेलीविजयप्रसन्नाः भाग्यं विजज्ञौ रघुनाथमातुः ॥१५॥

संप्रार्थयामास च देवमन्तः नितान्तभक्त्या दृढसेवितं तम् ।
प्रभो ! स्वभक्तापदमुद्धरन् ते शिवे कृपाच्छत्रमखण्डमस्तु ॥१६॥
तत्र स्थितो राजगडे स्वमातृप्रेमप्रसादापहृताखिलाधिः ।
स चिन्तयामास दिवाऽथ नक्तं स्वराज्यशत्रुघ्नमुपायजातम् ॥१७॥
दिल्लीपतेर्मातुल उन्मदात्मा शाहिस्तखानाभिध इद्धगर्वः ।
दिने दिने दीनजनान् विशुष्यन् शिवान्तरुच्चैर्व्यथयाञ्चकार ॥१८॥
स चाकणाख्यं महता बलेन च्छलेन चैकं विजिगाय दुर्गम् ।
यद्रक्षणायाल्पतमैः प्रवीरैः नियुध्यमानैश्चकितोऽरिसंघः ॥१९॥
विजापुरेशेन निमन्त्रितोऽसौ शिवाधिराज्यस्य विमर्दनाय ।
दुर्गं परिण्डाख्यममुष्य चैव जित्वाऽकरोत् तन्मनसः प्रकम्पम् ॥२०॥
तत्सान्त्वनार्थं प्रहितोऽग्रदूतः शिवाजिना वीतवया डबीरः ।
स किन्तु दुर्गद्वयलाभमत्तः तत्सामवाक्यानि तिरश्चकार ॥२१॥
तस्योच्चकैर्दक्षिण-दिग्जिगीषाम् उच्छेत्तुकामो रणनीतिविज्ञः ।
पर्णालदुर्गे सततप्रवृत्तं सङ्ग्राममाच्छेत्तुमियेष वीरः ॥२२॥
द्रागेव संदेशहरोऽग्रदूतः स्वराज्यमुद्राङ्कितराजपत्रम् ।
आदाय मूर्ध्ना च शिवं प्रणम्य पर्णालदुर्गं प्रति संप्रतस्थे ॥२३॥
दुर्गोत्तमं तं रिपवे समर्प्य राजाज्ञया निर्मदजौहराय ।
प्रत्यागतस्त्र्यम्बकभास्करोऽसौ नातिप्रसन्नः शिवपादमूलम् ॥२४॥
प्राप्तस्तदानीं गिरिगर्भगाही कश्चिच्चरो वृत्तनिवेदनाय ।
निर्मक्षिकं वीक्ष्य समन्ततोऽसौ जगाद शत्रोर्नवचेष्टितानि ॥२५॥
"स्वामिन्निदानीं शरदादिकाले प्रश्यानपङ्के सुतरापगे च ।
प्लवङ्गवृन्दैरपि दुर्विलङ्घ्यं सह्याद्रिमुल्लङ्घयितुमुद्यतोऽरिः ॥२६॥
प्रोत्साहितः कोङ्कणविक्रमाय मत्तेन दिल्लीपतिमातुलेन ।
अनेकवीरानुगतः प्रयाति चमूपतिः कार्तलवाभिधानः ॥२७॥
व्याघ्रीव धीरा प्रथिता च राजव्याघ्रीति नाम्ना महिला बलाढ्या ।
अरण्यमार्गे तमनुप्रयाति रक्षोगणं शूर्पणखेव नव्या ॥२८॥
अरातिसेना निबिडे च तुङ्गारण्येऽधुनाऽसंख्य-गजाश्वतुङ्गा ।
कृच्छ्रेण याति प्रतिपादमुच्चैः पथा वहन्ती महतीव सिन्धुः ॥२९॥
न पानयोग्यानि जलानि तत्र स्थली निवासानुचिताऽखिलाऽपि ।
वराह-शार्दूल-वृकोदराश्च कुर्वन्ति पीडां रिपुसैनिकानाम् ॥३०॥
वृत्तं यथावृत्तमिदं समग्रं निवेदितं स्वामिपदाब्जमूले ।
कालोचितं निर्णयमत्र कर्तुं कोऽन्यो भवत्तो नरदेव ! शक्तः ॥३१॥
प्रयातमात्रे हि चरेऽतिशीघ्रं निमन्त्रितास्तत्र तदा शिवेन ।
तान्हाजि-नेताजि-पिलाजि-मुख्याः सङ्ग्रामलीलारसिकाः सखायः ॥३२

स्वयं च सङ्ग्राममहोत्सवार्थं विधृत्य लौहं कवचं किरीटम् ।
तुरङ्गमारुह्य च वीरवर्यैः अन्वागतो योद्धुमना बभूव ।।३३।।
नृसिंहसङ्घः शिवनायकोऽसौ सह्यप्रविष्टारिमतङ्गवृन्दम् ।
विध्वंसितुं शस्त्रनखाग्रपातैः ययौ गरुत्मत्समतीव्रवेगः ।।३४।।
प्रविश्य ते सत्वरमेव तुङ्गारण्यं निलीनास्तरुगुल्मपार्श्वे ।
रिपुप्रवेशं परिवीक्षमाणा निःशब्दसञ्चारमधिष्ठिताश्च ।।३५।।
दुराक्रमाध्वाक्रमणातिखिन्नास्त औत्तराहा यवनप्रवीराः ।
कथञ्चिदुग्रं तदरण्यमेत्य विश्रान्तिसौख्यं क्षणमन्वभूवन् ।।३६।।
क्षणेऽपरस्मिंस्तरुगुल्मलीनः चिरं युयुत्सुः स नृसिंहसङ्घः ।
पपात तस्मिन् रिपुसैन्यवृन्दे कार्पासराशाविव दीप्तवह्निः ।।३७।।
तेषां प्रहारैः प्रहरार्धकाले म्लेच्छप्रवीरैः प्रहृतासुभिश्च ।
सारण्यभूमिः सहसैव जाता शृगालजातेः खलु भोगभूमिः ।।३८।।
शूलैः कृपाणैरिषुभिश्च भल्लैः महाश्मभिश्चोन्नतवृक्षखण्डैः ।
अखण्डमुच्चैः परिखण्ड्यमाना सा म्लेच्छसेना नितरां ननाश ।।३९।।
तदात्मपक्षक्षयमीक्षमाणोऽप्यसौ हठात् कार्तलवो युयुत्सुः ।
प्रोत्साहयन् वीरवरान् स्वसैन्ये जगर्ज दीन्दीनिति शुष्ककण्ठः ।।४०।।
वीक्ष्यात्मपक्षक्षयमेव राजव्याघ्री ह्यसौ प्रोषितधीरभावा ।
निरोद्धकामा निजसैन्यनाशं सेनापतिं कार्तलवं जगाद ।।४१।।
सेनापते ! नूनमसि प्रवीरः समग्रसङ्ग्रामजयी सदैव ।
परन्तु वीरैरपि युद्धकाले युक्तं न हातुं सहसा विवेकः ।।४२।।
जयस्य लाभाय विहाय सौख्यं कुर्वन्ति वीराः समरे प्रयाणम् ।
स एव जायेत सुदुर्लभश्चेत् श्रेयो हि मन्ये समरात् प्रयाणम् ।।४३।।
प्रदीप्तदावानलमध्यतोऽपि शक्यं प्रयातुं सहसा कथञ्चित् ।
शिवाजिसैन्याक्रमणात् परन्तु कदापि कश्चिन्न बहिः प्रयातः ।।४४।।
तस्याफझुल्लस्य बलोद्धतस्य निःशेषसंहारमकाण्डपातम् ।
शिवाजिसैन्येन कृतं गताब्दे जगद् विजानाति समग्रमेतद् ।।४५।।
न कातरत्वं मयि लेशमात्रं नैसर्गिकं यत् महिलाजनस्य ।
सङ्ग्रामलीलारसिकाऽस्मि राजव्याघ्री न नाम्नाऽपि तु कर्मणैव।।४६।।
नैकेषु घोरेष्वपि सङ्गरेषु निसर्गसिद्धो मम धीरभावः ।
जानीहि नैव स्खलितः कथञ्चित् दिल्लीन्द्रलक्ष्म्या इव केतुदण्डः ।।४७।।
पुंवत्प्रगल्भाऽस्मि रणाङ्गणेषु वीरैरजय्याऽपि च खड्गयुद्धे ।
ख्यातप्रभावं शिवमप्ययं च काले निरोत्स्ये न परन्त्विदानीम् ।।४८।।
कालो ह्ययं नः प्रतिकूलगामी निरोधिताः स्मो गिरिगर्भभागे ।
त्रातुं महत् सैन्यमिदं विपन्नं श्रेयस्करी स्याच्छरणप्रपत्तिः ।।४९।।

असौ शरण्युः शरणागतानां सुक्षात्रधर्मप्रणयी शिवाजिः ।
आकर्णसंकृष्टधनुर्गुणोऽपि न क्षत्रियो हन्ति पदप्रपन्नम् ॥५०॥
शृण्वन्निदं स्त्रीवचनं सहेलं सोऽपश्यदारान्निजवीरसङ्घान् ।
विखण्डिताङ्गान् प्रपलायमानान् तृषात्मरक्तान्यपि लेलिहानान् ॥५१
शिवाजिसैन्येन जयोन्मदेन ह्यनुद्रुतान् खण्डितधैर्यबन्धान् ।
पदे पदे दुर्धरखड्गपातैः निपात्यमानान् प्रतिकारशून्यान् ॥५२॥
त्रायस्व सेनाधिपतेऽधुनाऽस्मान् केनाप्युपायेन विनाशकाले ।
शिवाजिरूपेण निहन्तुमेति साक्षान्महाकाल उदग्रखड्गः ॥५३॥
इत्यार्तशब्दं वचनं स्वसैन्यधुरन्धराणां बलिनां निशम्य ।
स तत्क्षणं निर्गलिताभिमानः शिवं प्रति स्वं प्रजिघाय दूतम् ॥५४॥
द्रागेव दूतः स च दीनमुद्रः शिवाजिमभ्येत्य हयाधिरूढम् ।
बद्धाञ्जलिः संप्रणिपत्य मूर्ध्ना निहन्यमानेषु दयां ययाचे ॥५५॥
वयं महाराज ! कृतापराधाः वनं प्रविष्टा भवतो यदेतत् ।
कृतापराधेष्वपि दुर्जनेषु न साधवो निष्ठुरतां भजन्ते ॥५६॥
विना जलं मीनवदेव सर्वे हा हा वयं निर्गतजीविताः स्मः ।
दिष्टया भवान् दृष्टिपथं प्रपन्नः तृषार्दितानां करुणापयोदः ॥५७॥
दया हि धर्मोऽखिलहिन्दुजातेः अनादिकालाद्भुवने प्रसिद्धः ।
नूनं भवद्रूपधरोऽत्र लोके स एव साक्षात् पुरतः स्थितो नः ॥५८॥
दयामयोऽसौ जगदेकनाथः तस्यावतारो हि भवान् मतोऽत्र ।
अभ्यर्थना तद्भवतः पुरस्तात् कथं न्वियं निष्फलतां भजेत ? ॥५९॥
न स्वर्णदानं न च रत्नदानं न धेनुदानं न च धान्यदानम् ।
न ज्ञानदानं न च राज्यदानं जीवप्रदानस्य तुलां बिभर्ति ॥६०॥
सङ्ग्रामशौर्येण हि निस्तुलेन दिग्गाहिनी सा भवतः सुकीर्तिः ।
प्रदानशौर्येण हि जीवितानां राजन् ! पुनः शाश्वततां भजेत ॥६१॥
शाहिस्तखानेन मदोद्धतेन प्रचोदिताः स्मो वयमत्र देशे ।
फलं परप्रत्ययनेयतायाः पर्याप्तमस्माभिरिहोपभुक्तम् ॥६२॥
दयानिधे भूरि तृषाकुलानां त्राणाय नस्ते करुणैव शक्ता ।
सा चेन्निरस्ता भवता क्षणेऽस्मिन् हा हन्त सर्वेऽपि वयं मृताः स्मः ॥६३
इत्थं वचांसि शरणागतिसूचकानि श्रुत्वारिदूतगदितानि सगद्गदानि ।
निष्कोषितासिरपि शत्रुविमर्दनाय कारुण्यसान्द्रहृदयः शिवराज आह ॥

तोयं पिबन्तु तृषिताः सरितो यथेच्छं
गच्छन्तु निर्भयतया स्वगृहाणि सर्वे ।
कृच्छ्रार्दितेषु हि रिपुष्वपि शस्त्रपातं
धर्मप्रिया वयमिमे न कदापि कुर्मः ॥६५॥

सद्धर्मरक्षणकृतेऽस्मि गृहीतखड्गः
तत्पालनं परतरः खलु मे स्वधर्मः ।
ये किन्तु धर्मरिपवः स्वजना अपि स्युः
नूनं मता मम महारिपवस्त एव ॥६६॥
अत्राक्रमद्भिरहितं विहितं भवद्भिः
यन्मे तदस्ति खलु दुर्धरदण्डनार्हम् ।
आज्ञापये तदखिलं निजवस्तुजातं
मुक्त्वेह गच्छत यथेच्छमितोऽन्यदेशम् ॥६७॥
युद्धं समाप्तमधुनेति शिवस्य वाणीं
निर्मथ्यमानरिपुसैनिकहर्षहेतुम् ।
प्रोद्घोषयन्त उपसैन्यगणान् निरीयुः
वार्ताहराः सपदि सर्वत एव सर्वे ॥६८॥
युद्धोन्मदैरपि समग्रनृवीरवर्यैः
उल्लङ्घिता न हि कथञ्चन सा शिवाज्ञा ।
उच्छृङ्खलोऽपि नितरां स महाम्बुराशिः ।
वेलां मनागपि कदाचन नोद्विहन्ति ॥६९॥
तदनुविहतशेषा म्लेच्छयोधाः समस्ताः
गज-तुरग-सुवर्णाद्यं निजं वस्तुजातम् ।
दृढतरमभिमानं चापि तत्रैव हित्वा
झटिति झटिति तुङ्गारण्यतः संप्रयाताः ॥७०॥
उदकमतिपिबन्तस्तेऽल्पनद्यास्तृषार्ताः
अपरिमितमुदश्च प्राणलाभेन तेन ।
पथि मुदितमनस्का बाढमन्योन्यमूचुः
शिव इव भुवि वीरो नैव चान्यो दयालुः ॥७१॥

**॥ इति श्री शिवराज्योदये महाकाव्ये जीवदानं नाम**

**३९ तमः सर्गः समाप्तः ॥**

## ।। श्रीशिवराज्योदये महाकाव्ये ४० तमः सर्गः ।।

## सूर्यराव-मर्दनम्

इत्थं कार्तलवं वीरं पराजित्य पराक्रमी ।
आचकाङ्क्ष शिवो जेतुं रिपून् कोङ्कणसंस्थितान् ।।१।।
तुङ्गारण्यमरातीनां रक्षितुं पुनराक्रमात् ।
वीराग्रगण्यो नेताजिर्नियुक्तस्तत्र दुर्जयः ।।२।।
त्वङ्गत्तुरङ्गमारूढः स्फुरत्खड्गभुजार्गलः ।
पृष्ठारोपितकूर्मत्वक् तरस्वी प्रययौ शिवः ।।३।।
तान्हाजिश्च पिलाजिश्च तथा त्र्यम्बकभास्करः ।
वीरास्तमनुगच्छन्तोऽहृष्यन् वीरधुरन्धरम् ।।४।।
दुरुल्लङ्घ्यमरातीनां सह्यमुल्लङ्घ्य लीलया ।
फलाढ्यपनसोद्गन्धं ते कोङ्कणमुपागताः ।।५।।
तत्र दाल्भेश्वरं देवं समुद्रतटवासिनम् ।
भक्त्या परमयानर्च शिवभक्तिपरः शिवः ।।६।।
शिवेनोन्नादितानां हि घण्टानां तत्र मन्दिरे ।
प्रतिदध्वान सर्वत्र कोङ्कणेषु महाध्वनिः ।।७।।
चकम्पिरेऽखिलास्तत्र देवविद्रोहिणः खलाः ।
भृशं मुमुदिरे चान्ये साधवो देवपूजकाः ।।८।।
पलायामासिरे स्वं स्वं पदमुत्सृज्य दुर्मदाः ।
विजापुरीयसाम्राज्याधारभूताधिकारिणः ।।९।।
दृप्तराजन्यसंहारव्रतमुत्तीर्य भार्गवः ।
यत् पुण्यमाश्रयत् क्षेत्रं सह्यसागरमध्यगम् ।।१०।।
वासिष्ठीतीरसंस्थं तत् तीर्थं शिव उपागतः ।
स्वादर्शभूतं तं देवं भक्त्यार्चयितुमुत्सुकः ।।११।।
स काल-काम-मध्यस्थो देवः परशुभूषणः ।
तुतोष पूजकं प्राप्य शिवं स्वसमविक्रमम् ।।१२।।
भूयसीर्दक्षिणाः प्राप्य तत्रत्या वैदिका द्विजाः ।
प्रहृष्टा ऊचुरन्योन्यं कर्णोऽसावद्य वीक्षितः ।।१३।।
ततो विजित्य सहसा नगरं संगमेश्वरम् ।
तान्हाजिश्च पिलाजिश्च नियुक्तौ तत्र रक्षकौ ।।१४।।

देवरूखाभिधं ग्रामं ततः स प्रययौ द्रुतम् ।
अनुकूलयितुं सूर्यरावं सुर्वेकुलोद्भवम् ।।१५।।
तस्यापकारमखिलं क्षणं विस्मृत्य दुःसहम् ।
सान्त्वप्रयोगमारेभे तद्वशीकरणोचितम् ।।१६।।
शिवसामर्थ्यमालोच्य वर्धमानं दिने दिने ।
स ययाचे सुरक्षार्थमात्मनः क्रीतपुत्रताम् ।।१७।।
अथाङ्ग्लानां हि नीचत्वं संस्मरंस्तदहर्निशम् ।
पर्णालदुर्गेऽस्त्रस्फोटैः शत्रुसाहाय्यकारिणम् ।।१८।।
अत्युग्रतमदण्डोऽसौ राष्ट्रस्वातन्त्र्यविद्विषाम् ।
आङ्ग्लान् दण्डयितुं दण्ड्यान् ययौ राजपुरं प्रति ।।१९।।
लोलुभा वणिजस्तत्र नानादेशसमागताः ।
धनराशिमधिष्ठाय तस्थुः पन्नगसन्निभाः ।।२०।।
गरुत्मद्वृन्ददेश्येन शिवसैन्येन धर्षिताः ।
वल्मीककल्पेष्वलयन् निलयेष्वखिलाः खलाः ।।२१।।
शिवाज्ञयाऽत्यजन् सर्वे ममत्वं वित्तसञ्चये ।
वेला हि खलु वीराज्ञा लोकस्याम्बुनिधेरिव ।।२२।।
अनाहूता अपि प्राप्ता गोरुण्डा शिवसम्मुखम् ।
पुण्यक्षेत्रमिवोत्तप्ताः पापप्रक्षालनेच्छवः ।।२३।।
घोरापराधदण्डार्हान् स्वसमक्षमवेक्ष्य तान् ।
सन्दुधुक्षे चिरं दान्तः शिवक्रोधहुताशनः ।।२४।।
स बभाण महातेजाः ज्वलदक्षरया गिरा ।
धक्ष्यन्निवाहितानाङ्ग्लान् स्वातन्त्र्यद्रोहकारिणः ।।२५।।
बध्यन्तामखिला आङ्ग्ला दुर्मदा श्वापदा इव ।
कारालये च रुध्यन्तामस्पृष्टरवितेजसि ।।२६।।
आचूलमूलमेतेषां द्रागगारं निपात्यताम् ।
संगृह्यतां धनं सर्वं तस्कराणां दुरात्मनाम् ।।२७।।
तदादेशमनुसृत्य गोरुण्डा दण्डमाप्नुवन् ।
यथाकालं फलन्त्येव पापानि खलु पाप्मनाम् ।।२८।।
ग्रामाणि कोङ्कणस्थानि ततोऽन्यानि बहूनि च ।
स जित्वा क्रमशो वीरः स्वराज्यं समवर्धयत् ।।२९।।
सोऽयं शिवजयोदन्तो वार्ताहरनिवेदितः ।
दिने दिनेऽन्तरदहद् विजापुरनराधिपम् ।।३०।।

अपारयन्ती संश्रोतुमिमा वार्ता अरुन्तुदाः ।
सम्राण्माता च सा वृद्धा मक्कामेव विनिर्गता ।।३१।।
विजापुरमहीशोऽसौ कार्याकार्यविमूढधीः ।
निस्सहायमिवात्मानं मेने मर्दितबान्धवः ।।३२।।
अपरिच्छिन्नसाहाय्यो नाफझल्लो न फाझलः ।
शशाक यं पराजेतुं कस्तमन्यो विजेष्यते ।।३३।।
अपश्यन् वीरमपरं समर्थं शिवमर्दने ।
सस्मार सूर्यरावं तं सुर्वेवंश्यं स्वकिङ्करम् ।।३४।।
तमादिदेश राजाऽसौ पत्रेणात्ममनोगतम् ।
अनन्यगतिकानां हि यः कोऽपि शरणास्पदम् ।।३५।।
कोङ्कणेषु समायातो योऽधुना गिरिमूषकः ।
निरुध्यतां सपद्येव सोऽस्मत्साम्राज्यतस्करः ।।३६।।
इति तत्पत्रसन्देशं प्राप्य दुर्दास्यमोहितः ।
सूर्यरावः स दुर्बुद्धिः शिवद्रोहपरोऽभवत् ।।३७।।
कृतघोरापराधोऽपि यः शिवेन वशीकृतः ।
हा हन्त पत्रमात्रेण सोऽप्यरीणां वशं गतः ।।३८।।
दुर्दास्यहतबुद्धीनां स्वातन्त्र्यं न सुखावहम् ।
विषयाकृष्टचित्तानां यथा श्रीहरिकीर्तनम् ।।३९।।
सहसा सूर्यरावोऽसौ निशीथे सेनयान्वितः ।
सङ्गमेश्वरमापेदे शिवराज्यविपत्तये ।।४०।।
महावीरः स तानाजिः ग्रीष्मसूर्यप्रतापवान् ।
उत्तस्थौ सूर्यरावस्य हन्तुं कौशिकचेष्टितम् ।।४१।।
विध्वस्ता प्रहरेणैव सूर्यरावस्य वाहिनी ।
प्रखरैः खड्गशूलानां प्रहारैर्वज्रदुर्धरैः ।।४२।।
दृष्टं रणाङ्गणं प्रातः सर्वतश्छिन्नमुण्डकम् ।
विकीर्णपाणिचरणं रुधिरक्लिन्नरेणुकम् ।।४३।।
शृङ्गारपुरमायातः सूर्यरावः पराहतः ।
विच्छिन्नशृङ्गस्तुङ्गाद्रौ कान्तारमिव गण्डकः ।।४४।।
तमन्वगादनुपदं शिवप्रतिनिधिर्द्रुतम् ।
पराभवाविलं तस्य मनः शोधयितुं पुनः ।।४५।।
पालीभूपं पराजित्य जसवन्ताभिधं तदा ।
सूर्यराव-प्रतीक्षार्थं शिवः कालमयापयत् ।।४७।।

दुर्भागधयविहतप्रज्ञोऽसौ दास्यमोहितः ।
शिवाय नात्मनो मेने शिवस्य किल दर्शनम् ॥४८॥
तेन कालविलम्बेन ज्ञात्वा तत्प्रतिकूलताम् ।
तत्याज सहसा क्रुद्धः शिवोऽपि स्वानुकूलताम् ॥४९॥
ससैन्यः संप्रतस्थेऽसौ प्रक्षोभाविललोचनः ।
कर्तुं विहतशृङ्गारं शृङ्गारपुरनायकम् ॥५०॥
सेनासञ्चारसम्भूतं धूलीपटलमम्बरे ।
आरादवेक्ष्य निर्यातः सूर्यरावो वनान्तरे ॥५१॥
तं हन्तुकामः स्वातन्त्र्यद्रोहिणं तद्गृहं गतः ।
खड्गपाणिर्ज्वलन्नेत्रः क्रोधदष्टाधरः शिवः ॥५२॥
निर्जने सदने तत्र ददृशेऽतीवसुन्दरम् ।
राजतं राजपट्टाङ्कं राजसिंहासनं महत् ॥५३॥
दृष्ट्वा सिंहासनं तस्य नीचस्य च तदुच्चकैः ।
तीव्रलत्ताप्रहारेण शिवोऽधस्तादपातयत् ॥५४॥
शिवपदविहतं पपात भूमौ
विशकलिताङ्गमदश्च दास्यपीठम् ।
वपुरिव शकटासुरस्य तस्य
हरिचरणाभिहतं विभिन्नगात्रम् ॥५५॥

**॥ इति श्रीशिवराज्योदये महाकाव्ये सूर्यरावमर्दनम् नाम**
**४० तमः सर्गः समाप्तः ॥**

## ।। श्रीशिवराज्योदये महाकाव्ये ४१ तमः सर्गः ।

## शास्ताखानविमर्दनम्

स एव कोङ्कणं जित्वा स्वराज्यरिपुमर्दनः ।
प्रत्याजगाम विजयी शिवो राजगडं प्रति ।।१।।
सम्प्राप्ते शिशिरे काले विगलत्-तरुपल्लवे ।
रजोधूसरिताकाशे शुष्कशीर्णतृणाङ्कुरे ।।२।।
असुखस्पर्शनस्पर्शे सुखस्पर्शाग्नितेजसि ।
चन्द्रप्रायस्फुरत्सूर्ये हिमप्रायजलाशये ।।३।।
त्वरायित-प्रदोषे च विलम्बितदिनोदये ।
युगायितत्रियामे च क्षणायित-दिने तथा ।।४।।
घननीहारसञ्चार-मलिनीभूतचन्दिरे
शीतलानिलसम्पर्क-निस्सत्त्वीकृतभास्करे ।।५।।
प्रज्वलद्वह्निसान्निध्यसंपुञ्जीभूतनिर्धने ।
विचित्रौर्णिकसद्वस्त्राच्छन्नगात्रमहाधने ।।६।।
कोष्णशय्या-सुखासक्ति-प्रशान्ताखिललालसे ।
प्रातः कवोष्णकूपाम्भःस्नानोत्सुक-सुधार्मिके ।।७।।
प्रफुल्लकुन्दकुसुमे परिम्लानाम्बुजाकरे ।
निष्फलाखिलमाकन्दे सुफलोदुम्बरद्रुमे ।।८।।
प्रातः कुञ्झटिकाच्छन्न-तुङ्गपर्वतशेखरे ।
सायं गोचरणोद्धूतरजो-लुप्तमहावने ।।९।।
चिरं भानुकरस्पर्शसौख्यसुप्रियदक्षिणे ।
तुषारानिल-संस्पर्शक्लेश-नातिप्रियोत्तरे ।।१०।।
स राजगडवास्तव्यः शिवः स्वे सदने स्थितः ।
सुहृद्भिर्मन्त्रयामास शास्ताखानविमर्दनम् ।।११।।
तानुवाच सुहृद्वर्यान् निजादेशवशंवदान् ।
दुस्साहसमयं किञ्चित् कार्यं सुचिरचिन्तितम् ।।१२।।
योऽयं दिल्लीपतेरत्र मातुलोऽतुलदुर्मदः ।
महाराष्ट्रे समायातस्तमिच्छामि निषूदितुम् ।।१३।।
चिरेण तेन दुष्टेन जनताऽत्र प्रपीडिता ।
कष्टं जीवति हा हा धिक् सौनिकायत्त-गौरिव ।।१४।।
क्षत्रियाणां परो धर्मो ह्यापन्नपरिपालनम् ।
स चेन्न पाल्यते सम्यग् धिगस्तु हतजीवितम् ।।१५।।

प्रमत्तम्लेच्छनिवहैर्धर्षितानां गृहे गृहे
कुलाङ्गनानामाक्रन्दा कथयन्तीव मामिह ॥१६॥
गृहीतकरवालोऽहमाखेटिक इव स्वयम् ।
प्रविश्य निलये तस्य ऋक्षवत् तं विदारये ॥१७॥
महासाहसिकस्येवं ज्ञात्वा तस्य मनीषितम् ।
व्यामूढभावमापन्ना धीरा अपि सुहृद्वराः ॥१८॥
सुदुर्घटमिदं कर्म कथङ्कारं विधीयताम् ।
इति चिन्ताकुलाः सर्वे तूष्णींभावं प्रपेदिरे ॥१९॥
तेषु कश्चिद् विलम्बेन मौनमुद्रां प्रभेदयन् ।
मन्दं मन्दं मनाग् भीतः कथञ्चिद् वच आददे ॥२०॥
"राजन् ! वीरवरस्येदं तव साहसकाङ्क्षितम् ।
सुदुर्घटमिति ब्रूयात् को नु त्वद्विक्रमं स्मरन् ॥२१॥
त्वयात्यल्पबलेनापि चतुरङ्गबलान्वितः ।
विनाशितोऽफझुल्लोऽसौ यथा वृत्रो बिडौजसा ॥२२॥
पर्णालदुर्गे ग्रस्तस्त्वं जौहरेण दुरात्मना ।
ततोऽपि बहिरायातो राहुवक्त्रादिवार्यमा ॥२३॥
त्वया निसर्गधीरेण देव ! सांन्नाहुकेन हि ।
यद् यदाचरितं कर्म तत् तदन्यस्य दुष्करम् ॥२४॥
परन्त्विदानीं यद् देव कर्तुमिच्छसि साहसम् ।
सर्वथा दुष्करं मन्ये जानन्नपि बलं तव ॥२५॥
सपादलक्षसंख्येन सैन्येनातिबलीयसा ।
संरक्ष्यते दिवानक्तं हन्तव्यः स रिपुस्तव ॥२६॥
अनीक्षिता न गच्छन्ति यत्र ते मशका अपि ।
कथं नु त्वादृशः शस्त्री प्रविशेत् तत्र सद्मनि ॥२७॥
दुरात्मनोऽन्तःकरणे सद्बोधोऽपि समाविशेत् ।
गृहे तु शास्ताखानस्य प्रवेशस्तव दुर्घटः ॥२८॥
राहोरपि शिरो भूमौ पतेच्चन्द्रकराहतम् ।
त्वच्चन्द्रहासाघातेन कथं नु रिपुमस्तकम् ॥२९॥
मेघोदबिन्दवोऽपीयुर्भुवं भित्वा रसातलम् ।
व्यूहमुल्लङ्घ्य तत्सद्म कथं नु तव सैनिकाः ॥३०॥
स्फुलिङ्गोऽपि हि नेत्रान्तः प्रविशेदकृतव्यथः ।
गृहीतकारवालस्त्वं द्विषतोऽन्तर्गृहे कथम् ॥३१॥
पिपीलकोऽपि प्रसरेद् गूढं श्रवसि हस्तिनः ।
अत्यन्तचपलोऽपि त्वं कथं नु रिपुसद्मनि ॥३२॥

रक्षिणो जागरूकास्ते घोरशस्त्राः सहस्रशः ।
गृध्रदृष्ट्या निरीक्षन्ते चराचरविचेष्टितम् ॥३३॥
प्रसर्पन् गन्धवाहोऽपि शिबिरान्तरितस्ततः ।
रक्षकैः कुत एतीति स गन्धेन परीक्ष्यते ॥३४॥
एवं सेनानिवेशं तं दुष्प्रवेशतमं रिपोः ।
प्रविश्य राजन्नेकाकी कथं शत्रुं हनिष्यसि ॥३५॥
तत् तस्य भाषितं श्रुत्वा सुहृदः संशयात्मनः ।
बलान्मौनमुपाश्रित्य शिवः सस्मितमैक्षत ॥३६॥
सखाय इङ्गितज्ञास्ते साकूतं वीक्ष्य तत् स्मितम् ।
निरस्तभयसन्देहा अहसन्नुच्चकैर्मुदा ॥३७॥
कश्चिदन्योऽब्रवीद् तत्र संशीतिस्त्वयि नोचिता ।
कार्यसिद्धिः सरीसर्ति यस्य ते वचसोऽग्रतः ॥३८॥
अविनिश्चित्य साफल्यं कर्तव्यस्य स्वकर्मणः ।
वृथा न वाचमादत्ते कर्मयोगी भवादृशः ॥३९॥
मर्त्यलोके ह्यसंकल्प्यं स्वर्गलोकेऽपि दुर्घटम् ।
यद् ब्रूते तत् करोत्येव कर्मयोगी भवादृशः ॥४०॥
भाग्यवन्तो वयं नूनं पामरा वनवासिनः ।
चिन्तामणिरिव प्राप्तो यैरिह त्वादृगग्रणीः ॥४१॥
आदिदिक्षसि यद्यन्नः करणीयं सुदुष्करम् ।
तत् तदेवावगच्छ त्वं कृतमित्येव तत्क्षणे ॥४२॥
तवाभीप्सितमित्येव सफलं कर्म तादृकम् ।
यत्ना हि पामराणां नः प्रायो यान्ति निमित्तताम् ॥४३॥
कृष्णस्यैव महाशक्त्या स गोवर्धन उद्धृतः ।
तोषाय किन्तु गोपानां तत्तलस्पर्शडम्बरः ॥४४॥
त्वया संकल्पितं कार्यं तव शक्त्यैव सेत्स्यति ।
सन्तोषः परमस्माकं त्वत्साहाय्यमुपेयुषाम् ॥४५॥
इति तद्भाषितं शृण्वन् नितान्तानतमस्तकः ।
निर्विण्णः स्तवनेनेव ततो निर्यातुमुत्थितः ॥४६॥
सुहृदः पारिषद्याश्च समुत्थितमवेक्ष्य तम् ।
सह तेनैव तत्कालं प्रतिबिम्बवदुत्थिताः ॥४७॥
तस्यामेव निशीथिन्यां चराः कपटकोविदाः ।
रिपुरन्ध्राणि विज्ञातुं संप्रचेरुः शिवाज्ञया ॥४८॥
शूरा नियुद्धनिष्णाताश्चतुःशतमितास्तदा ।
दुरूहं साहसं कर्तुं संगृहीताः सुहृद्वराः ॥४९॥

शुद्धाष्टम्यर्धरात्रे हि चैत्रमासस्य निश्चितम् ।
सहसाक्रम्य दुष्टस्य शास्ताखानस्य मर्दनम् ॥५०॥
रमझानोपवासेन निशि भुक्त्वाऽऽमिषं भृशम् ।
गाढनिद्रावमग्नेषु यवनेष्वखिलेष्वपि ॥५१॥
खड्गचर्मधरो धीरोऽनुयातो वीरसैनिकैः ।
महावीरः प्रतस्थेऽसावुत्खातुं लोककण्टकम् ॥५२॥
स्थले स्थले निरुद्धास्ते यद्यप्यरिगणैर्निशि ।
न शशाक परिज्ञातुं कोऽप्यमून् कूटकोविदान् ॥५३॥
प्राविशन् क्रमशः सर्वे सहसा तन्महालयम् ।
शास्ताखानः स यत्रासीत् सुखनिद्रावशं गतः ॥५४॥
नानाविधविलासानामुपभोगैरखण्डितम् ।
परिश्रान्ता यवन्यश्च यत्रासन् स्वप्नमोहिताः ॥५५॥
आरक्षिणश्च यत्रत्या भूरिभोजनतुन्दिलाः ।
निरस्तभीतिसन्देहाः स्वप्नस्वर्ग इवारमन् ॥५६॥
प्रातराशार्थमन्नानि पचितुं पाककोविदाः ।
सूदाः केचन यत्रासन् व्यापृताः स्वस्वकर्मसु ॥५७॥
यो यो दृष्टिपथं प्राप्तः सुप्तो जागरितोऽथवा ।
कृतान्तकवलीभूतः खड्गाघाताहतः स सः ॥५८॥
इष्टिकापिहितं द्वारं विनिर्भिद्यान्तरं द्रुतम् ।
प्राविशन् सदनान्तस्ते यत्रासीन्निद्रितो रिपुः ॥५९
तत्रत्यो यवनः कश्चिद् विनिद्रः सहसोत्थितः ।
भिया दुद्राव वेगेन शास्ताखानस्य कोष्ठकम् ॥६०॥
स तमाह महाभीतिग्रस्त-वाक्शक्तिसञ्चरः ।
सदनान्तः समायाताः केऽपि शस्त्रधरा इति ॥६१॥
सुखस्वप्ननिमग्नोऽसौ बोधितोऽप्यमुना भृशम् ।
शय्यां मृद्वीममुक्त्वैव चुक्रोध परिबोधिने ॥६२॥
गच्छ गच्छ महामूढ ! दुःस्वप्नेनासि बाधितः ।
मा स्म भञ्जीः सुखस्वापं चिरजागरितस्य मे ॥६३॥
यूयमारक्षिणः सर्वे प्रकृत्यातीव घस्मराः ।
रमझानोपवासेन नक्तं खादथ भूरिशः ॥६४॥
अत्याहारेण कुप्यन्ति वातपित्तादयो भृशम् ।
येषां ते निशि पश्यन्ति स्वप्नानशुभसूचकान् ॥६५॥
इति ब्रुवति सक्रोधं तस्मिन्निद्रासुखालसे ।
प्रविष्टस्तत्र वेगेन लसत्खड्गधरः शिवः ॥६६॥

व्याविद्धाः यवनाः सर्वे यवन्यश्च भयार्दिताः ।
चक्रन्दुरुच्चकैर्घोरं दृष्ट्वा तन्मृत्युताण्डवम् ॥६७॥
भीत्यातिकम्पमानाभिर्धावन्तीभिरितस्ततः ।
वात्याभिरिव दासीभिर्दीपाः निर्वापिताः क्षणात् ॥६८॥
तत्र गाढतमोमग्ने सदने भीतिसंकुले ।
विद्युल्लता अभासन्त भ्रमत्खड्गलतामयाः ॥६९॥
निजान्यभेदमज्ञात्वा यो यः पुर उपागतः ।
ताभिः कृतान्तजिह्वाभिः स स द्राक् कवलीकृतः ॥७०॥
फत्तेखानाभिधः पुत्रः शास्ताखानस्य दुर्भगः ।
नियुध्यमानः पित्रर्थे तत्कालं पञ्चतामगात् ॥७१॥
अवध्या अपि शूराणां धार्मिकाणां विशेषतः ।
अकस्मान्निर्हताः काश्चिच्छास्ताखानस्य योषितः ॥७२॥
योषितश्चतुराः काश्चित् तद्रक्षणपरायणाः ।
निन्युरन्तःप्रकोष्ठं तं गूढं जवनिकावृतम् ॥७३॥
स्वखड्गाघातवध्यं तं दुष्टारातिं गवेषयन् ।
शिवो विवेश तत्रैव क्रोधोद्दीप्तविलोचनः ॥७४॥
पलायमानमालोक्य तं नीचमतिकातरम् ।
सण्डीनलीलयोत्प्लुत्य शिवः खड्गमपातयत् ॥७५॥
आसन्नमृत्युकल्पोऽपि दुर्भाग्येन स रक्षितः ।
कुतो भाग्यविहीनस्य मरणं शिवखड्गतः ॥७६॥
खड्गाघातेन विच्छिन्न-सव्यपाण्यङ्गुलीत्रयः ।
शास्ताखानो विदुद्राव कथञ्चन जिजीविषुः ॥७७॥
मत्वा निषूदितः शत्रुरिति शीघ्रं बहिर्ययौ ।
भयार्तजनसम्मर्दात् शिवः प्रागरुणोदयात् ॥७८॥
तेऽप्याहतावशिष्टाश्च कृतकृत्याः सुहृज्जनाः ।
यथागतं बहिर्जग्मुरविज्ञाता अरातिभिः ॥७९॥

इति रिपुमतिलीलयैव दुष्टं
परिपीड्य स्वबलेन भूरिसैन्यम् ।
तद्वधमवगत्य दूतवाक्यात्
कृतकृत्योऽपि शिवो न तोषमाप ॥८०॥

**॥ इति श्रीशिवराज्योदये महाकाव्ये शास्ताखानविमर्दनाख्यः एकचत्वारिंशत्तमः सर्गः समाप्तः ॥**

## ॥ श्रीशिवराज्योदये महाकाव्ये ४२ तमः सर्गः ॥

## ॥ सुरत-दहनम् ॥

अथापराम्भोनिधितीरशोभा महापुरी सूरतनामधेया ।
अगण्यरत्नोपचयप्रकाशा सिन्धूत्थिता श्रीरिव राजते स्म ॥१॥
यां स्वर्णरत्नर्धिविशेषरम्या स्रोतस्वती सा तपती प्रसिद्धा ।
विलोलकल्लोलमयाक्षिपातैः समीपतः संततमीक्षते स्म ॥२॥
प्रत्यग्रदूर्वाभ-हरिन्मणीनां पलाशपुष्पच्छवि-विद्रुमाणाम् ।
कर्पूरखण्डद्युतिमौक्तिकानां यत्र प्रभा नेत्रसुखं वितेनुः ॥३॥
यस्यां विपण्यामनिशं धनाढ्याः सुवर्णवस्त्रोत्तमरत्नभूषाः ।
सवित्तकोषं स्म परिभ्रमन्ति क्रेतुं स्ववाञ्छोचितरत्नजातम् ॥४॥
यत्रापणेषु भ्रमतां जनानां मरीच-भङ्गा-जतुकादिगन्धाः ।
केषाञ्चिदुद्वेगमथापरेषां प्रसन्नतां काञ्चन तन्वते स्म ॥५॥
अनेकदेश्या जनता हि यत्र विचित्रवेषा विविधाङ्गवर्णा ।
परस्परं वित्तपरोद्यमेषु प्रादर्शयत् कृत्रिममात्मभावम् ॥६॥
अन्योन्यभाषाऽनवबोधभीतेः सम्मिश्रभाषाव्यवहारवन्तः ।
वणिग्जनाः क्रेतृगणैरवोचन् प्राधान्यतो यत्र च हावभावैः ॥७॥
आङ्ग्लास्तुरुष्का अरबास्तथान्ये पाश्चात्यदेश्या धनराशिलुब्धाः ।
महालयेषूषुरुदारभोगा यस्यां भुजङ्गा इव रत्नवन्तः ॥८॥
यत्राङ्ग्लदेश्या अतिगौरवर्णा नार्यः प्रसन्नाननसुस्मितास्ताः ।
हतत्रपा यान्ति पथा विशङ्कं स्वभर्तृहस्तग्रथितस्वहस्ताः ॥९॥
म्लेच्छाङ्गना यद्यपि हृद्यरूपाः लोकावलोकादतिलज्जमानाः ।
यत्र क्वचिद् यान्ति मनाक्स्खलन्त्य आशीर्षपादं पिहितस्वदेहाः ॥१०॥
वाणिज्यलब्धं विपुलं स्ववित्तम् आरेक्तुकामा विविधोपभोगैः ।
यस्यामधन्या धनिनो युवानो वाराङ्गनासद्मसु निन्युरायुः ॥११॥
सुरूपवत्योऽपहृताः कुमार्यो भार्यास्तथा ब्राह्मणगुर्जराणाम् ।
यतोऽन्यदेशं प्रति वाहिता हा म्लेच्छैर्धनान्धैर्बत विक्रयार्थम् ॥१२॥
विशीर्णचैला कृशदेहबन्धाः भारश्रमस्विन्नसमस्तगात्राः ।
ते क्रीतदासा विपणीषु यत्र पर्यक्षिपन् कातरदृष्टिपातान् ॥१३॥
समामिलन् यत्र च यात्रिकास्ते मोहम्मदीया विविधप्रदेश्याः ।
प्रयातुकामा उडुपैश्च नौभिः मक्काभिधानं निजधर्मपीठम् ॥१४॥
प्रभूत-हस्त्यश्व-पदाति-सैन्यो निरस्तसर्वारितयाऽपभीतिः ।
दिल्लीपतेः शासनतः शशास यत्राधिकारी स इनायताख्यः ॥१५॥

स्मर्यताम् ! पठ्यताम् ! त्वर्यताम् !

# वाराणसीक्षेत्रे श्रीकाशीविश्वेश्वरसंनिधाने

आश्विन कृ. ८, १८९० सोमवासरे १४-१०-६८

पण्डितराज-पूज्यश्री-द्राविड राजेश्वरशास्त्रीणां चरणकमलेषु

स्वात्मार्पण-सौभाग्यं लब्धवती

## शारदा संस्कृत-पत्रिका

स्वीये दीपावली-विशेष-भव्याविष्कारे

## कैः कैः सौभाग्यालंकारैः मण्डिता ?

शुभाशीर्मङ्गलम् । श्रीशृङ्गेरी-द्वारकादि-पीठ 'श्री' चरणाः

पू. पण्डितराज द्राविड राजेश्वरशास्त्रिणः

शृङ्गेरी-शारदा-पीठ-परिचयः

मैसूर-महाराजः श्रीजयचामराज वाडियारः

शृङ्गेरी-श्रीगणपति-वाक्यार्थ-महासभा ( १९६८ ) चक्षुर्वै सत्यम्-

प्राचार्य भागवत वामनशास्त्री

श्रीगणपति-वाक्यार्थ-महासभा-( १९६७ ) मुम्बापुरी

विख्यात-विदुषां न्यायादिशास्त्रेषु निबन्धरत्नानि

श्रीसिद्धरामनाथकथा ( महाकाव्य-श्लोक-साहस्री ) योगी नरहरिनाथः

अभङ्गवाणी-संस्कृतं तुकारामीयम् —डॉ. ग. बा. पळसुले

जैत्रयात्राविलाससारः-द्वारका-पीठ-श्री-प्रसादः

बालानां सुखबोधाय-रम्या बालकथा-प्रा. कृ. श्री. अर्जुनवाडकर.

बाबा ताहेर-साहिती ( फारसी संस्कृतीकृता ) न्या. गुण्डेराव हरकरे

पत्ररत्नमञ्जूषा-विविधाः पत्रलेखकाः

ग्रन्थरत्नसमीक्षा-पं. औदुम्बरकरः वासुदेवशास्त्री

चित्ताकर्षकः विज्ञापन-विन्यासः-विविधा व्यावसायिकाः ।

नयन-रम्यं मुखपृष्ठम्

अनुल्लिखितम् इतरद् बहु ।

**पृष्ठसंख्या ३२० विशेषाङ्कमूल्यम् रू. ८**

१० ऑक्टोबर १९६८—पूर्वम् एव वार्षिक मूल्य प्रेषकेभ्यः विनामूल्यम्

४२५ सदाशिव, पुण्यपत्तनम् २ व्यवस्थापकः 'शारदा'

शारदा-(पुण्यपत्तनम् २.) ९ : २१-२४ ★ रजि. क्र. एम्. एच्. ५५७
● लायसेन्स क्र. १३७ टु पोस्ट विदौट प्रीपेमेण्ट.

## ब्रह्मश्री-विद्यावाचस्पति-पं. कवीश्वराणां राजसन्मानः

पुण्यपत्तनम् दि. ५ सप्टेम्बर १९६८—

शिक्षक-दिन-निमित्तेन डॉ. सर्वपल्ली राधाकृष्णन् महोदयानां जन्मदिने भारतशासनेन अस्मिन् वर्षे सत्कार्याणां शिक्षकोत्तमानां या नामावली प्रकटीकृता तत्र ब्रह्मश्रीविद्यावाचस्पतिः पं. कवीश्वर दत्तात्रेयशास्त्री इत्येतेषां शुभनामोल्लेखं दृष्ट्वा समग्रं महाराष्ट्रराज्यं साभिमानं नन्दति नन्दति नन्दत्येव । विद्यावाचस्पति पं. कवीश्वर दत्तात्रेयशास्त्रिणः नैकविधैः धर्मपीठाधीशैः सच्चरिष्णु-वेदान्तत्वेन महाराष्ट्र-शास्त्रिमण्डले सर्वोत्तमत्वेन सत्कृताः सन्ति । पूज्यगुरुचरणानां धर्मपीठमान्यं वैदुष्यं राजमान्यतां गतम् इति स्वाभाविकम् एव सर्वेषां प्रमोदास्पदम् ।



पं. कवीश्वर दत्तात्रेयशास्त्री

* * * * * * * * * * *

हार्दम् अभिनन्दनं लोकराज्योभयमान्यानां पू. गुरुचरणानाम् । संपादकः

## अग्रिमाङ्कः दशमवर्षारम्भ-दीपावली-विशेषाङ्कः ।

संपादकः मुद्रकः प्रकाशकः स्वामी – वसन्त अनन्त गाडगीळ
मुद्रणस्थलम्– यशवन्त मुद्रणालयः, १८३५ सदाशिव, पुण्यपत्तनम् २.
प्रकाशनस्थलम्-१.- म.म. प्रा. द. वा. पोतदार, ४९८ शनिवार, पुण्यपत्तनम् २
२.- श्री ल. म. चक्रदेव, ३१८ राममोहनमार्गः मुम्बापुरी ४
कार्यालयः— शनिनामहालभवनम्, ४२५ सदाशिव, पुण्यपत्तनम् २.